विलासः प्रियदृष्ट्यादौ चारुत्वं गात्र-कर्मणोः ।
वेषाल्पतैव विच्छित्तिः परां शोभां वितन्वती ॥ १८४ ॥

लीला दयितवागादेः स्वे न्यासो बहुमानतः ।
विव्वोकोऽनादरो मान-दर्पादिष्टेऽपि वस्तुनि ॥ १८५ ॥

विहृतं जल्पकालेऽपि मौनं ह्री-व्याज-मौग्ध्यतः ।
ललितं गात्रसञ्चारः सुकुमारो निरर्थकः ॥ १८६ ॥

कचौष्ठादिग्रहे कोपो मृषा कुट्टमितं मुदि ।
मोट्टायितं प्रियेक्षादौ रागतो गात्रमोटनम् ॥ १८७ ॥

मुहुः स्मिताश्रु-कम्पादेः सङ्करः किलिकिञ्चितम् ।
औज्ज्वल्यं यौवनादीनामथ शोभोपभोगतः ॥ १८८ ॥

सा कान्तिः पूर्णसम्भोगा दीप्तिः कान्तेस्तु विस्तरः ।
सौम्यं तापेऽपि माधुर्यमौदार्यमुचिताच्युतिः ॥ १८९ ॥

चेतोऽविकत्थनं धैर्यं प्रागल्भ्यं कौशलं रते ।
यथौचित्यं च नेतॄणां नायिकाः कुलजादयः ॥ १९० ॥

सहायिन्यस्तु धात्रेयी-लिङ्गिनी-प्रातिवेशिकाः ।
शिल्पिनी-चेटिका-सख्यो गुप्ता दक्षा मृदु-स्थिराः॥१९१॥

देवानीचनृणां पाठः संस्कृतेनाथ जातुचित् ।
महिषी-मन्त्रिजा-पण्यस्त्रीणामव्याजलिङ्गिनाम् ॥१९२॥

बाल-षण्ढ-ग्रहग्रस्त-मत्त-स्त्रीरूप-योषिताम् ।
प्राकृतेनोत्तमस्यापि दारिद्र्यैश्वर्यमोहिनः ॥ १९३ ॥

अत्यन्तनीच–भूतादौ पैशाची मागधी च वाक् ।
शौरसेनी तु नीचस्य देशोद्देशे स्वदेशगीः ॥ १९४ ॥

तिर्यग्–जात्यन्तरादीनामानुरूप्येण सङ्कथा ।
भाषा–प्रकृति–वृत्तादेः कार्यतः क्वापि लङ्घनम् ॥ १९५ ॥

आर्येति शब्द्यते पत्नी लिङ्गिनी ब्राह्मणी द्विजः(जैः) ।
अम्बाऽपि जननी–वृद्धे पूज्या तु भवतीत्यपि ॥ १९६ ॥

भ्राताऽग्रजोऽधमैर्मन्त्री नटी–सूत्रभृतौ मिथः ।
पुरोधः–सार्थवाहाभ्यां पत्नी पत्न्या जरन् पतिः ॥ १९७ ॥

महाराजो नृपः सर्वैस्त्वार्यपुत्रेति यौवने ।
पुंसा भद्रेति भोक्तव्या प्रियेति दयिताऽथवा ॥ १९८ ॥

पितापुत्राभिधायोगैर्मुख्या देव्यपि राजभिः ।
विदूषकेण भवती राज्ञी–चेट्यौ नृपस्त्रियः ॥ १९९ ॥

भट्टिनी स्वामिनी देवीत्येवं सर्वाः परिच्छदैः ।
वेश्याऽज्जुकेति वृद्धा तु साऽत्ता तुल्या स्त्रिया हला ॥२००॥

हञ्जे त्वनुत्तमा–प्रेष्ये भगवादिति देवता ।
तपःस्था चार्च्य–देवर्षि–बहुविद्याः सयोषितः ॥ २०१ ॥

मान्यो नामान्तरै राजा लिङ्गिनाऽथ विदूषकैः ।
वयस्योऽप्यधमैर्भट्टी लोकैर्देवेति भूपतिः ॥ २०२ ॥

मित्राख्याभिर्विदू राज्ञा कुमारो भर्तृदारकः ।
मुनि–शाक्यौ भदन्तेति स्वप्रसिद्ध्याऽपरो व्रती ॥ २०३ ॥

सूत्री भावोऽनुगेनासौ तेन मार्षः समः सखा ।
शिष्यात्मजानुजाः पुत्र-वत्सौ तातो जरन्नपि ॥ २०४ ॥

सौम्यो भद्रमुखश्चेति नीचो हण्डे तु पामरैः ।
येन कर्मादिना यस्तु ख्यातः स तदुपाधिकः ॥ २०५ ॥

शूरे विक्रमसंसूचि कल्प्यं नामाथ वाणिजे ।
दत्तान्तं प्रायशो विप्रे गोत्र-कर्म्मानुरूप्यतः ॥ २०६ ॥

नृपस्त्रियां शुभं दत्ता-सेनान्तं पणयोषिति ।
पुष्पादिवाचकं चेट्यां चेटे मङ्गलकीर्तनम् ॥ २०७ ॥

इति श्रीरामचन्द्र-गुणचन्द्रनिर्मिते नाट्यदर्पणसूत्रे सर्वरूपकसाधारण
लक्षणनिर्णयो नाम चतुर्थो विवेकः समाप्तः ॥ ४ ॥

समाप्तं नाट्यदर्पणसूत्रम्





## श्रीरामचन्द्र–गुणचन्द्ररचितं

### स्वोपज्ञविवरणविभूषितं

# नाट्यदर्पणम् ।



चतुर्वर्गफलां नित्यं जैनीं वाचमुपास्महे ।
रूपैर्द्वादशभिर्विश्वं यया न्याय्ये धृतं पथि ॥ १ ॥

महाकविनिबद्धानि दृष्ट्वा रूपाणि भूरिशः ।
स्वयं च कृत्वा स्वोपज्ञं नाट्यलक्ष्म विवृण्वहे ॥ २ ॥

अलङ्कारमृदुः पन्थाः कथाऽऽदीनां सुसञ्चरः ।
दुःसञ्चरस्तु नाट्यस्य रसकल्लोलसङ्कुलः ॥ ३ ॥

न गीत–वाद्य–नृत्तज्ञा लोकस्थितिविदो न ये ।
अभिनेतुं च कर्तुं च प्रबन्धांस्ते बहिर्मुखाः ॥ ४ ॥

स कविस्तस्य काव्येन मर्त्या अपि सुधान्धसः ।
रसोर्मिघूर्णिता नाट्ये यस्य नृत्यति भारती ॥ ५ ॥

नानार्थशब्दलौल्येन पराञ्चो ये रसामृतात् ।
विद्वांसस्ते कवीन्द्राणामर्हन्ति न पुनः कथ(था)म् ॥ ६ ॥

श्लेषालङ्कारभाजोऽपि रसा निःस्यन्दकर्कशाः ।
दुर्भगा इव कामिन्यः प्रीणन्ति न मनो गिरः ॥ ७ ॥

आरङ्कादू भूपतिं यावदौचितीं न विदन्ति ये ।
स्पृहयन्ति कवित्वाय खेलनं ते सुमेधसाम् ॥ ८ ॥

प्राणाः कवित्वं विद्यानां लावण्यमिव योषिताम् ।
त्रैविद्यवेदिनोऽप्यस्मै ततो नित्यं कृतस्पृहाः ॥ ९ ॥

---

१ ॐ नमो वीतरागाय । अर्ह च०

नासिकान्ते द्वयं श्वित्रं द्वयोर्व्रीडा रसज्ञयोः ।
कुचाभावः कुरङ्गाक्ष्याः काव्याभावो विपश्चितः ॥ १० ॥

अकवित्वं परस्तावत् कलङ्कः पाठशालिनाम् ।
अन्यकाव्यैः कवित्वं तु कलङ्कस्यापि चूलिका ॥ ११ ॥

कवित्ववन्ध्याः क्लिश्यन्ते सुखाकर्तुं जगन्ति ये ।
नेत्रे निमील्य विद्वांसस्तेऽधिरोहन्ति पर्वतम् ॥ १२ ॥

अथ शिष्टसमयपरिपालनाय प्रत्यूहव्यूहोपशमनाय च सकलसन्दर्भार्थस्तवनागर्भं समुचितेष्टाधिदैवतस्य ग्रन्थकारौ नमस्कारश्लोकं परामृशतः—

चतुर्वर्गफला नित्यं जैनीं वाचमुपास्महे ।
रूपैर्द्वादशभिर्विश्वं यया न्याय्ये धृतं पथि ॥ १ ॥

'चतुर्वर्ग०' इत्यादि। चतुर्वर्गो धर्मार्थ–काम–मोक्षा यथौचित्यं प्रधानं गौणं वा फलं यस्याः। समुदाय–समुदायिनोरभेदोऽप्यस्ति, तेन पुरुषभेदे–नैक–द्वि–त्रिपुरुषार्थफलत्वेऽपि चतुर्वर्गफलत्वं न विहन्यते। इष्टलक्षणत्वाच्च फलस्य यो यस्य पुरुषार्थोऽभीष्टः स तस्य प्रधानमपरो गौ[ण]:। 'नित्यम्' इत्यनेन आवश्यकं वा[चः] चतुर्वर्गं प्रति हेतुत्वमुच्यते। अर्थापेक्षया जिनानामियं 'जैनी' जिनोपदिष्टं ह्यर्थसूरयो ग्रथ्नन्ति। 'वाचम्' इति भारतीम् 'उपास्महे' तदर्थानुष्ठानेन समीपे वर्तामहे। समीपवृत्त्या च तदेकशरणत्वमात्मनः ख्यापितम्। नित्यमित्यस्यात्रा(त्रा)पि सम्बन्धादुपासनस्याविश्वि(च्छि)त्तिः ख्यापिता। 'रूपाणि' अङ्गान्याचारादीनि दृष्टिवादपर्यन्तानि 'द्वादश' प्रसिद्धानि। सङ्ख्यानिर्देशेन चानियतनिश्चितसङ्ख्याया जिनवाचः प्रस्तुतातुल्यत्वेन व्यवच्छेदः कथ्यते। 'विश्वम्' इति समुदायापेक्षमेकत्वम्। कर्मभूमित्वात् प्राधान्यविवक्षया मनुष्यलोको वा विश्वम्। 'न्याय्ये' न्यायादनपेते 'धृतं' व्यवस्थापितम्। व्यवस्थापनस्य त्रैकाल्येऽप्यतीतनिर्देशोऽर्थापेक्षया वाचोऽनादित्वख्यापनार्थः। 'पथि' इति पुरुषार्थप्रापणोपायत्वादहिंसा–दानादिकं कर्म लक्ष्यते॥

(२) अथाभिनेयवाक्यपरतया श्लोकोऽयं व्या[ख्या]यते। यद्यपि

साक्षाद्धर्म-कामार्थफलान्येव नाटकादीनि, तथापि रामवद् वर्तितव्यं न रावणवदिति हेयोपादेय-हानोपादानपरतया धर्मस्य च मोक्षहेतुतया मोक्षोऽपि पारम्पर्येण फलम्। 'नित्यम्' इत्यनेन चतुर्वर्गफलान्येव रूपकाणि निबन्धनीयानि इति ख्याप्यते। जिनानां रागादिजेतॄणां लक्षणप्रणयनापेक्षयेयं 'जैनी'। न नाम सर्वज्ञोपविष्टं लक्षणं न। नवेक्षाऽर्वाचीनदृशः सङ्क्षेप-विस्तराभ्यां तत् कर्तुं प्रभवन्ति। 'वाचं' नाटकाद्यां 'उपास्महे' परिशीलयामः। नित्यमित्यत्रापि सम्बध्यते। सततापरिशीलिताभिनेच(य)वाचो हि कुतो नामौचित्यवेदिनो भवेयुः?। रूप्यन्ते अभिनीयन्ते इति रूपाणि नाटकादीनि। अनभिनेयायां रूपशब्दाप्रतीतेः सामान्यनिर्देशेऽपि वाचोऽभिनेयत्वं लभ्यते। भूरिभेदत्वेऽप्यभिनेयवाचो 'द्वादशभिः' इति प्रस्तुतप्रकरणापेक्षम्। 'विश्वम्' इति पूर्ववत् समवकारादीनां देव-दैत्यचरितव्युत्पादकत्वात्। 'पथि' इति यशःसम्पदुपायत्वात् कृत्यं लक्षयति। नायक-प्रतिनायकयोर्हि नयानयफलोपदर्शनेन नाटकादिभिर्दुर्दान्तचेतसां न्यायादनपेते कृत्ये प्रवृत्तिर्व्यवस्थाप्यते। अत्रापि व्याख्याने श्रद्धापरत्वेन नमस्कारपरतैव श्लोकस्य। व्याख्येय-व्याख्यानयोरेककर्तृकत्वख्यापनार्थमयमेव श्लोको विवरणस्याप्यादावधीत इति॥ १॥

अथ लक्षणस्य विषयं प्रतिजानीते—

अभिनेयस्य काव्यस्य भूरिभेदभृतः कियत्।
कियतोऽपि प्रसिद्धस्य दृष्ट लक्ष्म प्रचक्ष्महे॥ २॥

अभिनेयस्य वाचिकाङ्गिक-सात्त्विकाहार्यैरभिनयैः प्रत्यक्षीभावनयोग्यस्य। प्रकाराभिप्रायापेक्षं चैतत्, तेन रस-भाव-नायक-नायिकाऽऽदिलक्षणस्य अभिनेयं प्रति प्रवृत्तस्य अनभिनेयव्यापित्वेऽपि न विरोधः। काव्यस्य वर्णनात्मनः शब्दार्थग्रन्थनस्य कविव्यापारस्य। भूरीन् रसप्रधानान् नाटकादीन् अप्रधानरसांश्च दुर्मिलिता-श्रीगदित-भाणी-प्रस्थान-रासकादीन् भेदान् बिभर्ति। कियदित्यनान्तरीयकस्य रङ्ग-सन्ध्यन्तराद्यादिलक्षणस्य परिहारेण वक्ष्यमाणप्रबन्धद्वादशकग्रन्थनानान्तरीयकं कतिपयं लक्ष्मेति योगः। कियतोऽपि लक्षणविषयत्वेनाभिप्रेतस्य, तेन कोहलप्रणीतलक्ष्माणः सट्टकादयो

न लक्ष्यन्ते । लक्षणीयबाहुल्येऽपि हि यावत्येव भागे लक्षयितुः श्रद्धा तावा· नेव लक्ष्यते । कियतोऽपि च प्रसिद्धस्य रसप्राधान्यादखिललोकरञ्जकतया ख्यातस्य नाटकादेः । दृष्टं पूर्वमुनिप्रणीतनाट्यलक्षणपौर्वापर्यपरामर्शेन उपयु· क्ततया निश्चितम् । एवं च स्वमनीषिकानिरासेन लक्षणस्योपादेयत्वमुक्तम् । लक्षयत्यभिनेयादनभिनेयाच कियतोऽपि व्यवच्छिनत्तीति लक्ष्म(क्ष)णम् (लक्ष्म)। प्रचक्ष्महे सारासारोपादान–हानाभ्यां सङ्क्षेप–विस्तराभ्यां च प्रकर्षेण ब्रूमहे । एवं चापरप्रणीतलक्षणोत्कर्षेण निष्प्रयोजनत्वमपास्तमिति ॥ २ ॥

अथ व्यक्तिभेदानुद्देशे नियतं न शक्यते लक्षणमाख्यातुमिति तानुद्दिशति—

नाटकं प्रकरणं च नाटिका प्रकरण्यथ ।
व्यायोगः समवकारो भाणः प्रहसनं डिमः ॥ ३ ॥
अङ्क ईहामृगो वीथी चत्वारः सर्ववृत्तयः ।
त्रिवृत्तयः परे त्वष्टौ कैशिकीपरिवर्जनात् ॥ ४ ॥

चकारः सर्वपुरुषार्थफलत्वेन महापुरुषोपदेशार्हचरितत्वेन च प्रबन्धेषु नाटक–प्रकरणयोः प्राधान्यमाह । अथशब्दो नाटकादिचतुष्टयादपूर्णसन्धि-त्वेन विष्कम्भक–प्रवेशकायोग्यत्वेनानुपदेशार्हचरितप्रायत्वेन चोत्तरेषां पार्थ-क्यं ज्ञापयति । अङ्क इति उत्सृष्टिकाङ्को न पुनरवस्थासमास्यादिरूपः । अङ्क-वतां मध्ये पाठात् छन्दोऽनुरोधाच्च एकदेशेनाभिधानम् । चत्वार इति प्रकर-ण्यन्ता व्यक्तिभेदाः । सर्वा गु(गौ)णप्रधानभावेन चतस्रोऽपि वृत्तयो भारती–सात्वती–आ(त्या)रभटी–कैशिक्यो वक्ष्यमाणलक्षणा यत्र । तिस्रो भारती–सात्वत्यारभट्यो व्यस्ताः समस्ता वा वृत्तयो येषु । अत्र च येषु व्यायोग–समवकार–ई(रे)हामृग–डिमेषु एकस्या वृत्तेर्न लक्षणे प्राधान्यनिर्देशस्तेषु व्यक्ति-भेदेन पृथक् पृथगेकैकस्या वृत्तिः(त्तेः) कविस्वेच्छया प्राधान्यं निबध्यते । येषु तु भेदेषु भाण–प्रहसन–उ(नो)त्सृष्टिकाङ्क–वीथीषु यस्या वृत्तेः प्राधान्यनिर्दे-शस्तेषु प्रतिव्यक्ति तस्या एव प्राधान्यमपरयोर्गौणत्वमल्पत्वादभावो वा । कैशिक्याः परिः सामस्त्येन वर्जनं अभावः । यद्यपि समवकारे शृङ्गार-त्वमस्ति, तथापि न तत्र कैशिकी । न खलु काममात्रं शृङ्गारः, किन्तु विलासोत्कर्षः । न चासौ रौद्रप्रकृतीनां नेतॄणाम् । शृङ्गारशब्दश्च तत्र काम-मात्रपर्यवसायीति ॥ ३—४ ॥

अथ यथोद्देशं लक्षणमाह—

ख्याताद्यराजचरितं धर्म-कामार्थसत्फलम्।
साङ्गोपाय-दशा-सन्धि दिव्याङ्गं तत्र नाटकम्॥ ५॥

ख्याताद्यराजस्य चरितं यत्रेत्यन्यपदार्थः। इह ख्यातत्वं त्रिधा नाम्ना चेष्टितेन देशेन च। कौशाम्ब्यां चरितं वत्सराजेनैव रञ्जकम्। चरितमपि वत्सराजस्य कौशाम्ब्यां वासवदत्तालाभादिकमेव। वासवदत्तालाभादिकं वत्सराजस्य कौशाम्ब्यामेव। चरितख्यातत्वं च प्रधानचरितापेक्षया ततस्तदनुयायीनि रञ्जकत्वार्थ(अ)ख्यातान्यपि चरितानि क्रियन्ते। तेन बहुषु रामप्रबन्धेषु सीताहरणानयनोपायानां युद्धानां गौणपात्राण्यपरेषां च भणितिविशेषादीनां भेदेऽपि न दोषः। आद्येति पूर्वः, तेन वर्तमान-भविष्यतोर्निरासः। कविना हि रञ्जनार्थं किञ्चित् सदप्युपेक्ष्यते, किञ्चिदसदप्याद्रियते। वर्तमाने च नेतरि तत्कालप्रसिद्धिबाधया रसहानिः स्यात्, पूर्वमहापुरुषचरितेषु च अश्रद्धानं स्यात्। भविष्यतस्तु वृत्तं चरितमपि न भवति, चर्यते स्म चरितमित्यतीतनिर्देशात्। राजेति क्षत्रियमात्रम्, न पुनरभिषिक्त एव; राम-जीमूतवाहन-पार्थादीनामनभिषिक्तानामपि दर्शनात्। क्षत्रियो मर्त्य एव, तेन न देवनेतृकं नाटकमित्युक्तं भवति। नाटकं हि रामवद् वर्त्तितव्यं न रावणवदित्युपदेशपरम्। देवतानां तु दुरुपपादस्याप्यर्थस्येच्छामात्रत एव सिद्धिरिति तच्चरितमशक्यानुष्ठानत्वान्न मर्त्यानामुपदेशयोग्यम्; तेन ये दिव्यमपि नेतारं मन्यन्ते, न ते सम्यगमंसतेति। नायिका तु दिव्याऽपि भवति यथोर्वशी, प्रधाने मर्त्यचरिते तच्चरितान्तर्भावात्। उपदेशानर्हप्रायवृत्तत्वेन दीप्तरसत्वेनैव च समवकारादौ दिव्योऽपि नेता न विरुध्यते। चरितमित्याचरितम्, न तु कविबुद्धिकल्पितम्। बाहुल्यापेक्षं चैतत्, तेनाल्पं किमपि रञ्जकं कल्पितमपि न दोषायेति। धर्म-कामार्था व्यस्त-समस्ताः सत् प्रधानं फलं यत्र। मोक्षस्तु धर्मकार्यत्वात् गौणं फलम्। सन्तोऽचिरभावित्वाद् वर्तमाना वा धर्मार्थ-कामाः फलम्, तेन भाविधर्म-कामार्थफलत्वादागमा न नाटकम्। तत्र धर्मफले नाटके दया-दम-दान-न्यायप्रायं दृष्टफलमामुष्मिकफलं च राज्याद्यबाधया नेतुश्चरितं व्युत्पाद्यते, न पुनः सर्वसङ्गपरित्यागं कृत्वा व्रतमाचरितमित्यामुष्मिकफलमेव। साक्षाद्दृष्टफलार्थी हि लोकः। कामफले च

दिव्यकुलजस्त्रीसम्भोग-सङ्गीतक-कामचारोपवनविहारप्रायम् । अर्थफले च शत्रूच्छेद-सन्धि-विग्रहादिराज्यचिन्ताप्रायमिति । साङ्केति अङ्कोपायदशा-सन्धिभिर्वक्ष्यमाणैः सह वर्तते । दिव्याङ्गमिति दिव्यं देवता अन्योऽपि चोत्तमः प्रधानस्य नेतुरङ्गं सहायः पताका-प्रकरी-नायकलक्षणो यत्र । दिव्यो हि नेतैव विरुध्यते, न पुनः सहायः । अत्यन्तभक्तानामेवं नाम देवताः प्रसीदन्तीति देवताऽऽराधनपुरःसरमुपायानुष्ठानमाधेयमिति व्युत्पादनार्थं दिव्योऽप्यङ्गत्वेन कार्यः । तत्र देवता यथा-नागानन्दे गौरी । उत्तमप्रकृतिर्यथा-रामादिप्रबन्धेषु सुग्रीवादिरिति । यद्वा दिव्यानि अनवद्यानि अङ्गानि वक्ष्यमाणानि उपक्षेपादीनि यत्र । तत्रेति निर्धारणार्थः । अभिनेय-समुदायात् प्रधानपुरुषार्थप्रवृत्तविनेयराजादिव्युत्पादनगुणेन नाटकं निर्द्धा-र्यते । नाटकमिति नाटयति विचित्रं रञ्जनाप्रवेशेन सभ्यानां हृदयं नर्तय-तीति नाटकम् । अभिनवगुप्तस्तु नमनार्थस्यापि नटेर्नाटकशब्दं व्युत्पा-दयति, तत्र तु घटादित्वेन ह्रस्वाभावश्चिन्त्यः । यद्यपि कथाऽऽदयोऽपि श्रोतृहृदयं नाटयन्ति तथाप्यङ्कोपायादीनां वैचित्र्यहेतूनामभावात् न तथा रञ्जकत्वमिति न ते नाटकम् । तथा नाटकं प्रधानपुरुषार्थेषु राज्ञां तदङ्गभूतेष्वमात्यादीनां च बहूनां व्युत्पादकमिति कतिपयव्युत्पादकानि प्रकरणादीन्यपि न नाटक-मिति ॥ ५ ॥

अथ राजशब्दं व्याख्यातुं सामान्येन नेतुः स्वरूपमाह—

उद्धतोदात्त-ललित-शान्ता धीरविशेषणाः ।
वर्ण्याः स्वभावाश्चत्वारो नेतृणां मध्यमोत्तमाः ॥ ६ ॥

धीरो धैर्यं महाव्यसनेऽप्यकातर्यं विशेषणं येषां उद्धतादीनां धीरोद्धत-धीरोदात्त-धीरललित-धीरशान्ता इत्यर्थः । एवं नाम कविर्वर्णयति । जन्मो-त्थितास्तु स्वभावा नेतृणां यथा तथा वा सन्तु । नेतृणामिति बहुवचनात् प्राये-णैकस्मिन् धर्मिण्येकः स्वभावः, क्वचिदेव तु चत्वारः । मध्यमोत्तमा इति । यद्यपि स्वस्थाने सर्वमपि उत्तम-मध्यमाधमभेदेन त्रिधा, तथापि धीरोद्धता-दयः स्वभावा उत्तम-मध्यमभेदेनैव वर्णनीया इति ॥ ६ ॥

अथ बहुवचनात्तमेव विषयभेदं स्पष्टयति—

देवा धीरोद्धता धीरोदात्ताः सैन्येश–मन्त्रिणः ।
धीरशान्ता वणिग्–विप्रा राजानस्तु चतुर्विधाः ॥ ७ ॥

स्वभाव–स्वभाविनोरभेदात् सामानाधिकरण्यनिर्देशः । राज्ञां चातुर्विध्यभणनात् देवा धीरोद्धता एव, सैन्येश–मन्त्रिणो धीरोदात्ता एव, वणिग्–विप्रा धीरशान्ता एव वर्णनीया इति स्वयोगव्यवस्थापकत्वेनैवावधार्यते, नान्ययोगव्यवच्छेदेन । यः पुनः परशुरामस्यातिक्रूरत्वख्यापनार्थो धीरोद्धतत्वनिबन्धः स 'भाषा–प्रकृति–वेषादेः कार्यतः क्वापि लङ्घनम्' इत्यपवादादविरुद्धः । अयं च नियमो देवानां मर्त्यापेक्षया, न स्वापेक्षया; शिवादीनामुदात्तानां ब्रह्मादीनां च शान्तानामपि दर्शनात् । राजान इति क्षत्रियजातिः । बहुवचनात् व्यक्तिभेदेन चतुःस्वभावो नाटकस्य नेता, न पुनरेकस्यां व्यक्तौ । एकत्र प्राधान्येन स्वभावचतुष्कस्य वर्णयितुमशक्यत्वादिति । प्रधाननायकस्य चायं नियमो गौणनेतॄणां तु स्वभावान्तरमपि पूर्वस्वभावत्यागेन निबध्यते । ये तु नाटकस्य नेतारं धीरोदात्तमेव प्रतिजानते, न ते मुनिसमयाध्यवगाहिनः; नाटकेषु धीरललितादीनामपि नायकानां दर्शनात् कविसमयबाधाच्च ॥ ७ ॥

अथ धीरोद्धतादीनां यथोद्देशमर्थमाह—

धीरोद्धतश्चलश्चण्डो दर्पी दम्भी विकत्थनः ।
धीरोदात्तोऽतिगम्भीरो न्यायी सत्त्वी क्षमी स्थिरः ॥ ८ ॥

शृङ्गारी धीरललितः कलासक्तः सुखी मृदुः ।
धीरशान्तोऽनहङ्कारः कृपालुर्विनयी नयी ॥ ९ ॥

अकातरत्वं धीरशब्दस्यार्थः सर्वत्र समान एव । चलत्वादयः पुनरुद्धतादीनां शब्दानामर्थाः । चलोऽनवस्थितः । चण्डो रौद्रः । दर्पः शौर्यादिमदः । दम्भः कूटप्रयोगः । विकत्थनः स्वप्रशंसी । अतिगम्भीरो दुरवबोधमध्यः । सत्त्वी शोक–क्रोधाद्यनभिभवनीयः । स्थिरो विमृश्यकारी । कलासक्तो गीतादितत्परः । सुखी मन्त्रिन्यस्तराज्यचिन्ताभारत्वात्भिराधिः । मृदुरक्रूराचारः । अनहङ्कारः सर्वथाऽप्यनवलेपः । धीरोदात्तस्तु विनयच्छन्नावलेप

इति भेदः। विनयी गुरुजनाद्यनुल्लङ्घीति। उपलक्षणमात्रं चैतत्, तेनोद्धतादीनां यथौचित्यमपरेऽपि धर्मा द्रष्टव्या इति ॥ ८-९ ॥

अथ चरितशब्दं व्याचष्टे—

मुख्यमिष्टफलं वृत्तमङ्गं प्रासङ्गिकं क्वचित्।
सूच्यं प्रयोज्यमभ्यूह्यमुपेक्ष्यं तच्चतुर्विधम् ॥ १० ॥

मुख्यं सर्वप्रबन्धव्यापित्वात् प्रधानम्। इष्टं सर्वोत्कर्षेण कवेरभिप्रेतं फलं यस्य। वृत्तं चरितम्। अङ्गं मुख्यवृत्तस्यानुयायित्वादवयवः। प्रसङ्गात् परकीययत्नादागतं प्रासङ्गिकम्। इह तावत् न निसर्गतः किञ्चित् चरितं मुख्यमङ्गं वा, किन्तु बहुष्वपि फलेषु कविर्यस्यात्यन्तमुत्कर्षमभिप्रैति तत्फलमिष्टम्। अनेन च यत् फलवद् वृत्तं तदिह मुख्यम्। तदितरदङ्गत्वात् प्रासङ्गिकम्। रामप्रबन्धेषु हि सुग्रीवमैत्री-शरणागतविभीषणरक्षण-रावणवध-सीताप्रत्यानयनादिषु सीताप्रत्यानयनस्यैव प्राधान्यं कविना प्रतिपादितम्। तत्सम्पादनाय तदितरेषु प्रवृत्तेः। अत एव तान्यङ्गानि। कविरपि न स्वेच्छया फलस्योत्कर्षं निबद्धुमर्हति, किन्त्वौचित्येन। यस्य धीरोद्धतादेर्यदेव फलमुचितं तस्यैवोत्कर्षो निबन्धनीयः। प्रासङ्गिकस्यापि च मुख्यवृत्तप्रयत्नेनैव निष्पत्तिर्विधेया। प्रयत्नान्तरे हि तदपि मुख्(ख्यं) स्यात्। तापसवत्सराजे हि वत्सराजस्य मुख्याय कौशाम्बीराज्यलाभाय प्रवृत्तेनैव यौगन्धरायणव्यापारेण प्रासङ्गिकं वासवदत्तासङ्गम-पद्मावतीप्राप्त्यादिकमपि साध्यते। क्वचिदिति यत्रैव मुख्यो नेता फलसिद्धौ सहायमपेक्षते तत्रैव प्रासङ्गिकम्, न सर्वत्र। यथा भट्टश्रीभवनुतचूडाविरचितायां कौशलिकायां नाटिकायां कौशलिकाप्राप्तिमधिकृत्य प्रवृत्तस्य वत्सराजस्य न प्रासङ्गिकम्। यथा वाऽस्मदुपज्ञे सत्यहरिश्चन्द्रे नाटके प्रतिज्ञानिर्वाहं प्रति प्रवृत्तस्य हरिश्चन्द्रस्य। तच्चतुर्विधमिति तत् सामान्येन वृत्तम् ॥ १० ॥

अथ चातुर्विध्यमेव स्पष्टयति—

नीरसानुचितं सूच्यं प्रयोज्यं तद्विपर्ययः।
ऊह्यं तदविनाभूतमुपेक्ष्यं तु जुगुप्सितम् ॥ ११ ॥

नीरस[म]रञ्जकम्। अनुचितं सरसमप्यनर्हम् आलिङ्गन–चुम्बनादि, तत् सूच्यं विष्कम्भकादिभिर्ज्ञाप्यम् । तस्य नीरसानुचितस्य सूच्यस्य विपर्ययः सरसमुचितं च प्रयुज्यते वाचिकादिभिरभिनयैः सामाजिकानां साक्षादिव क्रियत इति प्रयोज्यम् । तयोः सूच्य–प्रयोज्ययोरविनाभूतं देशान्तरप्राप्त्यादौ गमनादि ऊह्यते स्वयं वितर्क्यते इति ऊह्यम् । न नाम देशान्तरप्राप्तिः पादविहरणादिकं विना भवति। उपेक्ष्यते व्रीडाऽऽदिहेतुत्वादवगण्यते इत्युपेक्ष्यं योज्यम् । तयोः सूच्य–प्रयोज्ययोर्जुगुप्सनीयं भोजन–स्नान–शयन–प्रस्रवणादि । यत् पुनरुत्तररामचरिते रामोत्सङ्ग–निषण्णायाः सीतायाः, अस्मदुपज्ञे नलविलासे अरण्ये दमयन्त्याश्च शयनं प्रयुक्तं तत् प्रस्तुतोपयोगित्वात् रञ्जकत्वाच्च न दुष्टम् ॥ ११ ॥

अथ अन्यानपि वृत्तभेदान् दर्शयति—

प्रकाशं श्राव्यमन्येषां स्वगतं स्वहृदि स्थितम् ।
परावृत्त्य रहस्याख्याऽन्यस्मै तदपवारितम् ॥ १२ ॥

त्रिपताकान्तरोऽन्येन जल्पो यस्तज्जनान्तिकम् ।
आकाशोक्तिः स्वयं प्रश्न–प्रत्युत्तरमपात्रकम् ॥ १३ ॥

यद्वृत्तमगोप्यतया अन्येषामात्मव्यतिरिक्तानामपि श्राव्यं तत् प्रकाशत इति प्रकाशम् । यत् पुनरन्येषां गोप्यतया स्वहृद्येव स्थितं तत् स्वगतम् । परावृत्त्य अङ्गचलनेनाश्रावयितव्येभ्यः पराङ्मुखीभू[य]ान्यस्मै रहस्याख्या या तदपवार्यते बहूनां प्रच्छाद्यत इत्यपवारितम् । आख्यायत इत्याख्या कर्मसाधनः, तेन वृत्तमपवारितम्। एवमुत्तरत्रापि । जल्प्यत इति जल्पो वृत्तमेव । *ऊर्ध्वसर्वाङ्गुलिर्वक्रानामिकः करस्त्रिपताकः सोऽन्तरमश्राव्यं प्रति व्यवधानं* यत्रान्येन सह जल्पो जनानामेकस्यैव गोप्यत्वात् बहूनामन्तिकं श्राव्यतया निकटं जनान्तिकम्। इह यद् वृत्तमेकस्यैव गोप्यं बहूनामगोप्यं तज्जनान्तिकम्। तद्विपरीतमपवारितम्। प्रश्नश्च प्रत्युत्तरं चेति समाहारः। अपात्रकं रङ्गप्रविष्ट–द्वितीयपात्ररहितम्। रङ्गप्रविष्टपात्रेण स्वयमात्मनैव यः प्रश्नो यच्चोत्तरं तदाकाशे पात्राभावात् शून्ये उक्तिः आकाशोक्तिः। उच्यत इति उक्तिः प्रश्नोत्तरविषयोऽर्थः

क्वचित् स्वोत्तरार्थमनुभाषणच्छायया परकीयः प्रश्नः, क्वचित् स्वप्रश्नस्यानुभाषणच्छायया परकीयमुत्तरमित्युभयमप्याकाशोक्तिरिति ॥ १२–१३ ॥

अथ वृत्तस्य कर्तव्यगुणानाह—

स्वल्पपद्यं लघुगद्यं श्लिष्टावान्तरवस्तुकम् ।
सिन्धु–सूर्येन्दु–कालादिवर्णनाधिक्यवर्जितम् ॥ १४ ॥
एकाङ्गिरसमन्याङ्गमद्भुतान्त रसोर्मिभिः ।
अलङ्घितमलङ्कार–कथाऽङ्गैरगलद्रसम् ॥ १५ ॥

सुष्ठु प्रसन्नार्थं प्रसिद्धशब्दमल्पं परिमितं पद्यं यत्र। गद्येन ह्यर्थः कथ्यमानः सुखावबोधो भवति । लघु हृद्यं परिमितं च गद्यं यत्र । कर्कशं बहुसमासं च गद्यं दुर्बोधत्वात् खेदमुपनयति । श्लिष्टानि पारम्पर्येण प्रधान फलसम्बद्धान्यवान्तराणि प्रस्तुतान्तरालवर्तीनि वस्तूनि यत्र । नाट्ये हि तदेवावान्तरं वृत्तमायोज्यं यत् पारम्पर्येण प्रधानफलसाधकम् । यथा रत्नावल्यां प्लवगसम्पातः सागरिकाऽनुरागबीजस्य फलकस्य सम्प्राप्तिहेतुः । यथा वाऽस्मदुपज्ञे नलविलासे कापालिक-विदूषकनियुद्धं राज्ञोऽनुरागमूलस्य दमयन्तीप्रतिकृतिदर्शनस्य हेतु। सिन्धुर्नदी समुद्रो वा । सूर्येन्दुभ्यां तदुदयास्तौ गृह्येते । कालो वसन्तादिः प्रभातादिश्च । आदिशब्दात् गिरि–मधुपान–जलक्रीडाऽऽदि । सिन्ध्वादिकं हि काव्यकण्डूवशान्निष्फलं न वर्णनीयम् । सफलमप्येकेन द्वाभ्यां वा वृत्ताभ्याम्, आधिक्यं तु रसमन्तरयतीति । एको नायकौचित्येनाप्रतमोऽङ्गी प्रधानरसो यत्र । अन्येऽङ्गिरसादपरे रसा अङ्गं गौणा यत्र । नाटके हि सर्वरसं केवलमेकोऽङ्गी, तदपरे गौणाः । अद्भुत एव रसोऽन्ते निर्वहणे यत्र । यतः शृङ्गार–वीर–रौद्रैः स्त्रीरत्न–पृथ्वीलाभ–शत्रुक्षयसम्पत्तिः । करुण–भयानक–बीभत्सैस्तन्निवृत्तिरितीयता क्रमेण लोकोत्तरासम्भाव्यफलप्राप्तौ भवितव्यमन्तेऽद्भुतेनैव । अपि च नाटकस्यासाधारणवस्तुलाभः फलत्वेन यदि न कल्प्यते, तदानीं क्रियायाः फलमात्रं [न] किञ्चिदस्त्येवेति किं तदुपायव्युत्पादनाक्लेशेन ? । रसोर्मिभी रसाधिक्येनालङ्घितमविच्छिन्नम् । न नाम रसपरतया कथाशरीरमन्तरयेत् । अलङ्काराः श्लेषोपमाऽऽदयः । कथा वृत्तम् । अङ्गान्युपक्षेपादीनि अङ्गभूता रसाश्च तैरगलदत्रुटन् रसो यत्र । त एव श्लेषोपमाऽऽदयो विशेषा ये रसनिष्पत्तिप्रयत्नेनैव निष्पद्यन्ते । वृत्तान्ते अङ्गानि

उपक्षेपादीनि च तथा निबन्धनीयानि यथा न रसमन्तरयन्ति। अङ्गभूता रसाश्च तथा नियोज्या यथा नाङ्गिनं रसं तिरोदधत इति ॥ १४–१५ ॥

अथ वृत्तबन्धशिक्षामाह—

उक्तत्वाद् वक्ष्यमाणत्वाद् भूय कार्याद् यदुच्यते।
तत् कर्णे श्रावयेद् येन न याति पुनरुक्तताम् ॥ १६ ॥
गोपुच्छकेशकल्पानि नाट्यवस्तूनि कल्पयेत्।
उदात्ता रञ्जका भावा स्थापनीयाः पुर पुर ॥ १७ ॥

उक्तं पूर्वं वक्ष्यमाणं पुरः प्रकाश्यमानं प्रयोजनवशाद् भूयोऽपि यद् वृत्तमुच्यते तत् पुनरुक्तताभयात् पात्रस्य कर्णे कविः श्रावयेत्। तथा च दृश्यते 'कर्णे एवमेव'। गोपुच्छस्य च केशाः केचित् स्तोकमात्रयायिनः केचिन्मध्यावधयः केचिदन्तव्यापिनः। एवं प्रबन्धवस्तून्यपि। यथा रत्नावल्यां प्रमोदोत्सवो मुखसन्धावेव निष्ठितः, मुखोपक्षिप्तो बाभ्रव्यादिवृत्तान्तश्च निर्वहणारम्भे, रत्नावलीप्राप्त्यादयश्च साररूपाः पदार्था अन्त इति। उदात्ता उत्तमप्रकृतियोग्याः। अनुदात्ता अपि ये रञ्जका भावास्ते सकलस्यापि प्रबन्धस्य रसारोहार्थं पुरः पुरो निवेशनीया इति ॥ १६–१७ ॥

अथानिबन्धनीयमाह—

अयुक्तं च विरुद्धं च नायकस्य रसस्य वा।
वृत्तं यत् तत् परित्याज्यं प्रकल्प्यमथवाऽन्यथा ॥ १८ ॥

अयुक्तमनुचितं विरुद्धं विपरीतं परित्याज्यमुपेक्षणीयम्। धीरललितस्य ह्यनुचितं परस्त्रीसम्भोगादि, विरुद्धं धीरोद्धतत्वादि। शृङ्गारस्य प्रत्यक्षमालिङ्गन–चुम्बनाद्यनुचितम्, बीभत्सस्तु विरुद्धः। अन्यथेति औचित्येनाविरोधेन वा। यथा नलविलासे धीरललितस्य नायकस्य दोषं विना सधर्मचारिणीपरित्यागोऽनुचित इति कापालिकप्रयोगेण निबद्धः। एवमन्यदप्यूह्यमिति ॥ १८ ॥

धर्म–कामार्थसत्फलमिति सुगमत्वादुपेक्ष्य साङ्गोपाय–दशा–सन्ध्यात्यादङ्कपदं लक्षयति—

अवस्थायाः समाप्तिर्वा च्छेदो वा कार्ययोगतः ।
अङ्कः सबिन्दुर्दृश्यार्थश्चतुर्यामो मुहूर्ततः ॥ १९ ॥

अवस्था वक्ष्यमाणाः प्रारम्भादिकाः पञ्च । तत्रान्यतमस्या अवस्थाया उपक्रम-निष्पत्तिभ्यां या समाप्तिः । असमाप्तायामप्यवस्थायां कार्यवशेन यो वा च्छेदः खण्डनं सोऽङ्कः । कार्यं दूराध्वगमनाद्येकाहाद्यघटमानं भूयस्त्वादेकाहाशक्याभिनयं वा, तद्वशादवस्थाया अन्तराले यश्छेदः क्रियते सोऽप्यङ्क इत्यर्थः । एतावदङ्कलक्षणम् । सबिन्दुरिति सह बिन्दुना वर्तते । विच्छिन्नविस्तृतार्थस्योत्तराङ्कस्यानुसन्धानात्मा यत्सङ्क्षेप उत्तरत्र विस्तार्यमाणत्वादुदके तैलबिन्दुरिव बिन्दुः । पूर्वोत्तरयोरङ्कयोरसम्बद्धार्थत्वं मा भूदिति पूर्वाङ्कस्यान्ते बिन्दुर्निबन्धनीयः । यथा तापसवत्सराजे—

"आदौ मानपरिग्रहेण गुरुणा दूरं समारोपितां
पश्चात्तापभरेण तानवकृता नीतां परं लाघवम् ।
उत्सङ्गान्तरवर्तिनीमनुगमात् सम्पिण्डिताङ्गीमिमां
सर्वाङ्गप्रणयं प्रियामिव तरुश्छायां समालम्बते ॥"

इति तृतीयाङ्कसमाप्तावुत्तराङ्ककार्यानुसन्धायको बिन्दुः ।
यथा वा नलविलासे चतुर्थे स्वयंवराङ्के नेपथ्ये बन्दी—

"विन्यस्याभिनवोदये श्रियमयं राज्ञि प्रतापोज्झितो
द्यूतस्य व्यसनीव धूसरकरः सन्त्रुट्यदाशास्थितिः ।
निद्रायद्दललोचनां कमलिनीं सन्त्यज्य मध्येवनं
क्रामत्यम्बरखण्डमात्रविभवो देशान्तरं गोपतिः ।" इति ।

इदं च पदमुपयोगापेक्षम् । तेन सर्वरूपकपर्यन्ताङ्केष्वेकाङ्केषु च रूपकेषु समवकाराद्यङ्केषु चोपयोगाभावाद् बिन्दोरनिबन्धः । दृश्यार्थ इति दृश्या रञ्जकत्वाद् दर्शनीया अर्था नायकचरितोपभोगा यत्र । चरितासाक्षात्कारे हि प्रेक्षकाणामव्युत्पत्तिः । सम्भोगासाक्षात्कारे च किमनेन महाङ्केनेति वैरस्यं स्यात् । शापावमान-विवाहादयोऽपि

रङ्गकत्वात् साक्षात्कार्याः। यथोर्वश्याः शापोद्भवस्य लताभावस्य नाशः। दृश्याविनाभाविनौ सूच्यावूह्यावप्यर्थौ क्वचिद् भवतः। एतदङ्कस्य स्वरूपम्। चतुर्यामो मुहूर्तेत इति मुहूर्तादारभ्य यामचतुष्टयं यावत्। सर्वोपकर्षेण घटिकाद्वयाभिनेयः। सर्वोत्कर्षेण त्रिंशद्घटिकाऽभिनेयः। मुहूर्तादप्यपकर्षे प्रयोगापरिपूर्णत्वेन, यामचतुष्टयादप्याधिक्ये आवश्यककर्मविरोधेन च प्रेक्षक-प्रयोक्तॄणां वैरस्यं स्यात्। एतदङ्कस्यापकृष्ट-मध्यमोत्कृष्टं कालमानमिति। अमुना वृद्धसम्प्रदायायातेनाङ्कलक्षणेन वक्ष्यमाणनीत्याऽङ्कसङ्ख्यापरिमाणमुपपद्यते। ये तु वृद्धसम्प्रदायमवधूयाङ्कमध्येऽप्यवस्थां समापयन्ति, तन्मतसङ्ग्रहार्थमुत्तरार्धमेव लक्षणम्। अत्र पुनरङ्कसङ्ख्यानियमकारणमपरमन्वेष्यमिति ॥ १९ ॥

अथाङ्कस्य लक्षणशेषं सङ्ख्यापरिमाणं चाह—

आवश्यकाविरोध्यर्थ स्वल्पपात्रः सनिर्गमः।
पञ्चसङ्ख्योऽपकर्षेण दशसङ्ख्यः प्रकर्षतः ॥ २० ॥

एकस्मिन्नङ्के तावदवान्तराणि बहूनि कार्याणि न निबन्धनीयानि। यत्रापि निबध्यन्ते तत्राप्यावश्यकस्य सन्ध्यावन्दन-भोजनादेरविरोधेन। सुष्ठु कार्योपयोगीन्यल्पानि सङ्ख्यया पात्राणि यत्र। तत्रोत्कर्षेण दश, मध्यमगत्या अष्टौ, अपकर्षेण चत्वारि पञ्च वा पात्राणि। आधिक्ये तु पात्रसम्मर्देनैवाभिनयचतुष्टयं प्रेक्षकाणामविभावनीयं स्यात्। प्रभूतपुरुषसाध्यं पर्वतोद्धरणादि न रङ्गे दर्शनीयमित्युक्तं भवति। समवकारादौ तु बहुपात्रत्वेऽपि विशेषोपादानान्न दोषः। सनिर्गम इति निर्गमो रङ्गप्रविष्टपात्राणां स्वकार्याणि कृत्वा निष्क्रमो जवनिकया तिरोधानम्। पञ्चसङ्ख्य इति अत्यन्तस्तोकतायां पञ्चाङ्काः, सर्वोत्कर्षेण दश, मध्यमवृत्त्या षड् सप्त अष्टौ नवेत्यङ्कसङ्ख्या यद्भेदाः। यदैकैकस्यामवस्थायामेकैकोऽङ्कस्तदा पञ्चाङ्काः। यदा तु कार्यवशेन काऽप्यवस्थोपक्रमोपसंहाराभ्यां छिद्यते तदा षड्। एक उपक्रमाङ्कः। एक उपसंहाराङ्कः। अपरावस्थाचतुष्टयस्य तु चत्वारः। एवं कृत्वाऽष्टौ नव च। सर्वावस्थाभेदे तु दशेति।

यदाऽपि कार्यबहुत्वात् काऽप्यवस्था त्र्यङ्का तदाऽप्युत्कर्षतो दशैव। एकस्याः कस्याश्चिदेकाङ्ककरणात्। एकस्यां चावस्थायां अङ्कत्रयं दृश्यते। यथा वेणीसंहारे गर्भसन्धौ प्राप्त्याशावस्थाऽलङ्कृते तृतीय-चतुर्थ-पञ्चमा अङ्काः। न्यूनत्वे त्वङ्कानामेकाङ्कताऽपि स्यात्। तथा च पञ्च सन्धयो नोपसङ्ख्येरन्। आधिक्ये पुनरनियतसङ्ख्यत्वं स्यादिति मध्यमा वृत्तिराश्रीयते। नाटिका-प्रकरण्योस्तु चतुरङ्कत्वं कस्याश्चिदवस्थाया अवस्थान्तरे मिश्रणादिति ॥२०॥

अथाङ्कानिबन्धनीयमाह—

अभिघातः प्रधानस्य नेतुर्ग्रन्थ्यो न कुत्रचित्।
बन्धः पलायन सन्धिर्योज्यो वा फललिप्सया ॥ २१ ॥

अभिघातः शोणितहेतुः प्रहारः। प्रधानस्य मुख्यस्य, तेन पताका-प्रकरी-नायकादीनां ग्रथ्यत एव। कुत्रचिदिति विष्कम्भकादावपि। सामान्योक्तावप्यभिघातः परकृतः, तेन यदस्माभिः सत्यहरिश्चन्द्रे हरिश्चन्द्रेण देवतोपहारार्थं स्वयं स्वमांसोत्कर्तनं निबद्धं न तद् दोषाय। परेणापि विपक्षेण कृतो निषिध्यते, तेन नागानन्दे गरुडकृताभिघातस्य जीमूतवाहनस्य साक्षात्करणं परोपकाराय सत्त्वाधिक्येन विशेषतो रसपुष्टिमावहति। योऽपि चास्माभी रघुविलासे शक्तिसक्तवक्षसो लक्ष्मणस्य प्रवेशः कृतः सोऽपि न दोषाय, सीताऽऽनयनलक्षणफलसम्बन्धेन रामस्य मुख्यत्वात्। बन्ध इति परिग्रहणम्। यथा वासवदत्तानृत्तवारे वत्सराजस्य। पलायनमपसरणम्। यदाहुः—'अशक्ये सर्वमुत्सृज्यापगच्छेत्। दृष्टा हि जीवतः पुनरावृत्तिर्यथा सुयात्रोदयनयोः' इति। सन्धिः सन्धानम्। यदुक्तम्—

" प्रवृत्तचक्रेणाक्रान्तो राज्ञा बलवताऽबलः।
सन्धिनोपनमेत् तूर्णं कोशदण्डात्मभूमिभिः॥ " इति।

फललिप्सयेति। बन्धनादीनि तावन्न योज्यानि, यदि च योज्यन्ते तदा पर्यन्ते विशिष्टं फलमपेक्ष्य, न पुनरेवमेवेति ॥ २१ ॥

अथ विष्कम्भकादीनां लक्षणकथनार्थमङ्कावर्णनीयं विष्कम्भकादिभिर्वर्णनीयमित्याह—

दूराध्वयानं पूरोधो राज्य–देशादिविप्लवः ।
रतं मृत्यु' समीकादि वर्ण्यं विष्कम्भकादिभिः ॥ २२ ॥

दूराध्वयानमिति । मुहूर्तत्रिक–चतुष्कसाध्यं देशान्तरगमनं शक्यत्वादङ्केऽपि दर्श्यते । यत् पुनरधिककालसाध्यं तदशक्यत्वाद् विष्कम्भकादि[भि]रेव वर्ण्यम्, विश्रान्तिस्थान–शयन–पान–भोजनादीनां बहूनामरञ्जकक्रियाणां प्रसङ्गात् । समवकारादौ तु दूराध्वयानदर्शनेऽपि न दोषः, दिव्यस्य गगनक्रमणसामर्थ्यात् । नगररोधोऽप्येवमेव, सेनायाः पटकुटी–यन्त्र–सुरङ्गाऽऽदिदानव्यापाराणां च बाहुल्यात् । राज्य–देशादिभ्रंशोऽपि पतन–मरणादिसम्भवात् तथैव । रतमिति आलिङ्गन–चुम्बनादि व्रीडादायित्वादेवमेव, तेन तदनुकूलानि रहःप्रवेश–वक्रोक्त्यादीन्यङ्केऽपि दर्श्यन्ते । मृत्युः प्राणनिर्गम एव । समीकं हस्त–पादादिच्छेद एव, तेन नागानन्दे जीमूतवाहनस्य क्षणभाविनामिन्द्रियवैकल्यादीनाम्, रघुविलासे च रावणस्य विभीषणं प्रति साटोपं चन्द्रहासग्रहणस्याङ्केऽप्यविरोधः । आदिशब्दादपरमपि प्रभूतकाल–क्लेशसाध्यं व्रीडाऽऽतङ्कदायि च गृह्यते । आदिशब्देन प्रवेशकाङ्कास्यचूलिकाऽवताराणां ग्रहणमिति ॥ २२ ॥

अथ प्रथमं विष्कम्भकं शुद्धाशुद्धभेदं लक्षयति—

अङ्कानर्हस्य वृत्तस्य त्रिकालस्यानुरञ्जिना ।
सङ्क्षिप्य संस्कृतेनोक्तिरङ्कादौ मध्यमैर्नरैः ॥ २३ ॥

शुद्धो विष्कम्भकस्तत्र सङ्कीर्णो नीच–मध्यमैः ।
अङ्कसन्धायकः शक्यसन्धानातीतकालवान् ॥ २४ ॥

अरञ्जकं च रञ्जकमपि एकदिनाशक्याभिनयं च प्रेक्षकैः साक्षादनुपलभ्यमानमङ्कानर्हम् । त्रिकालस्य वृत्त–वर्त्स्यद्–वर्तमानकालस्य । अनुरञ्जिनेति असमस्तेन अदीर्घसमासेन च प्रसन्नेन । सङ्क्षिप्य विततमपि उत्तराङ्कसन्धानोपयोग्येव कृत्वा । संस्कृतेनेति शुद्धविष्कम्भकापेक्षम् । सङ्कीर्णे तु संस्कृतेनासंस्कृतेनापि च, नीचपात्रस्यापि तत्र भावात् । अङ्कादाविति

प्रथमेऽङ्के आसु(मु)खादूर्ध्वमन्ये(न्ये)षु पुनरारम्भे इति तावत् सर्वे समामनन्ति। कोहलः पुनरेतं प्रथमाङ्कादावेवेच्छति । मध्यमैरित्यमात्य-सेनापति-वणिग्-विप्रादिभिर्न पुनर्देवी-कुमार-नायक-प्रतिनायकादिभिः । मध्यमत्वं चैषां राजापेक्षया । राजपरिजनापेक्षया तु तेऽपि प्रधानम् । जनैरिति पुम्भिः स्त्रीभिः स्त्री-पुंसेश्च सामान्यवाचित्वात् । बहुवचनमतन्त्रम्, तेनैकेनापि स्वगतेनाकाशोक्त्या च निबध्यते । जनैरिति सामान्यनिर्देशादेव च शुद्धविष्कम्भके स्त्रिया अपि संस्कृतेनैव पातः(ठः) । शुद्धो नीचाप्रवेशात् । विष्कम्नात्यनुसन्धानेन वृत्तमुपष्टम्भयतीति विष्कम्भकः । तत्रेति विष्कम्भ-कादिषु पञ्चसु मध्यात् द्विभेदत्वेन विष्कम्भको निर्धार्यते । अथ सङ्कीर्णो नीचस्यापि प्रवेशात् । नीचा दास-चेट्यादयः । अङ्कसन्धायक इति अङ्कस्य अङ्कार्थस्य सन्धायकः संसूचकः प्रथमाङ्कभावी । अङ्कयोरङ्कार्थयोः सन्धायकः सम्बन्धकः पुनरङ्कद्वयान्तरालभावी । शक्यं सन्धानमनुस्मरणं यस्यासौ शक्यसन्धानः स चासावतीतकालोऽतीतकालवृत्तोऽर्थस्तद्वान् विष्कम्भको भवति। इह तावत् पुरुषप्रज्ञापेक्षया विष्कम्भकार्थकालो निबध्यते। राम-युधिष्ठिरादयो हि चिरातीतमप्यर्थमनुसन्दधतीति स तथैव निबध्यते। ये तु प्राकृताः स्तोककालमेवार्थमनुसन्दधते तदर्थस्तथैव निबन्धनीयः। कामफले तु नाटके वर्षैकवृत्तमेव निबध्यते, परतः संस्कारविच्छेदात्, वयोऽतिवृत्तेश्चेति ॥ २३-२४ ॥

अथ विष्कम्भकलक्षणानुवादेन प्रवेशकं लक्षयति—

एव प्रवेशको नीचैः परार्थैः प्राकृतादिना ।

एतौ प्रभूतकार्यत्वान्नाटकादिचतुष्टये ॥ २५ ॥

एवमिति 'अङ्कानर्हस्य' इत्यादि सर्वं विष्कम्भकलक्षणमत्रातिदिश्यते। केव[ल]मसौ नीचैरेव पात्रैः परार्थैर्मुख्यनायकादिकार्यनिष्ठैर्न पुनः स्वकृत्यैक-तत्परैः। यथा 'आणत्त म्हि भट्ट(ट्टि)दारियाए' इत्यादि। नीचप्रयुक्तत्वादेव

१ आज्ञप्ताऽस्मि भर्तृदारिकया।

च ग्राम्यार्थप्रायेण प्राकृतेन, आदिशब्दात् शू(शौ)रसेन्यादिना प्रवेशको भवति। अप्रत्यक्षान् अर्थान् सामाजिकहृदये [ प्रवेश ]यतीति प्रवेशकः। केचित् प्रवेशकं प्रथमाङ्कस्यादौ नेच्छन्ति। एताविति विष्कम्भक-प्रवेशकौ। नाटकादिचतुष्टयं नाटक-प्रकरण-नाटिका-प्रकरण्यः। नाटकादौ हि परिमितेनोपायेन बहुषु मुख्यावान्तरकार्येषु नृपादीनां तत्सहायानां चामात्यादीनां व्युत्पत्तिः क्रियते इत्यत्रैव प्रभूतावान्तरकार्यव्युत्पादकौ विष्कम्भक-प्रवेशकौ, न व्यायोगादिषु एकाङ्केषु तावदल्पवृत्तत्वेनाल्पकार्यत्वात्। बह्वङ्केष्वपि समवकारस्य परस्परासम्बद्धाङ्कत्वादपरेषां तु कतिपयदिनवृत्तत्वादिति। अङ्कास्यादीनि तु स्वल्पसूच्यत्वेन यथासम्भवं रूपकान्तरेष्वपि भवन्ति॥२५॥

अथ अङ्कास्य-चूलिके लक्षयति—

अङ्कास्यमन्तपात्रेण च्छिन्नाङ्कमुखयोजनम्।
वस्तुनः सूचनं चूला पात्रैर्नेपथ्यसंस्थितैः॥ २६॥

अन्तपात्रेणेति पूर्वस्याङ्कस्यान्ते स्त्रीपुंसाऽन्यतरेण पात्रेण च्छिन्नस्य असम्बद्धस्य उत्तराङ्कमुखस्य योजनमुपक्षेपो यस्तत् अङ्कास्यम् अङ्कमुखम्। यथा वीरचरिते द्वितीयाङ्कान्ते—

"प्रविश्य सुमन्त्रः-भगवन्तौ वसिष्ठ-विश्वामित्रौ भवतः सभार्गवान् आह्वयेते इति।

इतरे तु-क्व भगवन्तौ?।

सुमन्त्रः-महाराजदशरथस्यान्तिके।

इतरे-तदनुरोधात् तत्रैव गच्छामः।

इत्यङ्कसमाप्तौ। ततः प्रविशन्ति वसिष्ठ-विश्वामित्र-शतानन्द-जनक-परशुरामाः।"

इत्यत्र पूर्वाङ्कान्त एव प्रविष्टेन सुमन्त्रपात्रेण शतानन्द-जनककथार्थविच्छेदे उत्तराङ्कमुखसूचनात् अङ्कास्यमिति।

वस्तुन इति कस्यचिदर्थस्य सूचनमुपक्षेपः। पात्रैः स्त्री-पुंसैः नेपथ्यसंस्थितैर्यम(य)निकान्तरदेशस्थायिभिः। सा चूडेव चूलिका रङ्गाभिनेयार्थस्य नेपथ्यपात्रोक्तेः शिखाकल्पत्वात्। यथा उत्तरचरिते द्वितीयाङ्कस्यादौ—

"नेपथ्ये स्वागतं तपोधनायाः । ततः प्रविशति तपोधना । "

अत्र नेपथ्यपात्रेण स्त्रिया वासन्तिकया आत्रेयीवस्तुनः सूचनात् चूलिका ।

यथा वा नलविलासे द्वितीयाङ्कस्यादौ—

"स्वागतं सपरिच्छदाय कलहंसाय। ततः प्रविशति कलहंसो मकरिकाप्रभृतिकश्च परिवारः । "

अत्र नेपथ्यपात्रेण पुंसा शेखरेण कलहंसादिवस्तुनः सूचनात् चूलेति ।

यथा वा रत्नावल्याम्—

" अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा-
वास्थानीं समये समं नृपजनः सायन्तने सम्पतन् ।
सम्प्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोदीक्षते ॥ "

इति नेपथ्यपात्रेण बन्दिना काननस्थस्योदयनवस्तुनः सागरिकां प्रति सूचनात् चूलिका ॥ २६ ॥

अथाङ्कावतारं लक्षयितुमाह—

सोऽङ्कावतारो यत् पात्रैरङ्कान्तरमसूचनम् ।

पात्रान्तराभावेन यस्यैवाङ्कस्य पात्रैरविच्छिन्नार्थतया सूचनीयार्थस्याभावात् । प्रवेशक-विष्कम्भक-सूचनारहितमङ्कान्तरं भवति । स द्वितीयाङ्कावतारणादङ्कावतारः । यथा मालति(वि)काग्निमित्रे प्रथमेऽङ्के "विदूषकः-तेण हि दुवे वि देवीए पेक्खागिहं गदुय संगीदोवकरणं गहिय तत्तभवदो दूदं विसज्जेध । अधवा मुदंगसद्दो य्येव णं उत्थावइस्सदि "[1]

---

१ तेन हि द्वावपि देव्याः प्रेक्षागृहं गत्वा सङ्गीतोपकरणं गृहीत्वा तत्रभवन्तौ दूतं विसर्जयेतामथवा मृदङ्गशब्द एव नावुत्थापयिष्यति ।

इत्युपक्रमे मृदङ्गशब्दश्रवणादनन्तरं तान्येव सर्वाणि पात्राणि द्वितीयाङ्कमारभन्त इति ।

अन्ये तु यत्राङ्के अन्याङ्कानां बीजलक्षणोऽर्थोऽवतार्यते तमङ्कावतारमामनन्ति । यथा रत्नावल्यां द्वितीयोऽङ्कः । तत्र हि—"ईदिसस्स कन्नगारयणस्स ईदिसे य्येव वरे अहिलासेण भोदव्वं" इत्यादिकोऽनुरागलक्षणः सर्वाङ्कानामर्थ इति । अयं च गर्भाङ्कोऽप्युच्यते । यदाहुः—

"अङ्कान्तरेव चाङ्को निपतति यस्मिन् प्रयोगमासाद्य ।
बीजार्थयुक्तियुक्तो गर्भाङ्को नाम विज्ञेयः ॥" इति ॥

अथ विष्कम्भकादीनां विषयव्यवस्थामाह—

आद्यौ सूच्ये बह्वावन्ये क्रमादल्पे तरे तमे ॥ २७ ॥

तर–तमप्रत्ययौ नान्तरीयकतया सन्निधानाचाल्पशब्दं प्रकृतिमाकर्षतः, तेनाल्पतरे अल्पतमे इत्यर्थः । छन्दोऽनुरोधाच्च प्रत्ययानुकरणनिर्देशः । अन्येऽङ्कास्य–चूलिका–ऽङ्कावताराः । क्रमादिति लक्षणक्रमेण । बह्वौ बहुकाले च सूच्ये आद्यौ विष्कम्भक–प्रवेशकौ । अल्पे अल्पकाले चाङ्कास्यम्, अल्पतप(रे) [अल्प]तरकाले च चूलिकाऽल्पतमे अल्पतमकाले चाङ्कावतार इति ॥ २७ ॥

अथाङ्कानन्तरोद्दिष्टमुपायं व्याचष्टे—

बीजं पताका प्रकरी बिन्दुः कार्यं यथारुचि ।
फलस्य हेतवः पञ्च चेतनाचेतनात्मकाः ॥ २८ ॥

उपायस्वरूपापरिज्ञाने तद्विषयाणामारम्भादीनां [ स्वरूपपरिज्ञाना ] सम्भव [इति उपायस्वरूपं] व्युत्पाद्यते । यथारुचीति नैषामौद्देशिको निबन्धक्रमः सर्वेषामवश्यम्भावित्वं वा । फलस्य मुख्यसाध्यस्य हेतव उपायाः । इह हेतुर्द्विधा अचेतनश्चेतनश्च । अचेतनोऽपि मुख्यामुख्यभेदाद् द्विधा । मुख्यो बीजम्, तन्मूलत्वादितरेषाम् । अमुख्यस्तु कार्यम् । चेतनोऽपि द्विधा मुख्य उपकरणभूतश्च । मुख्यो बिन्दुः कार्यानुसन्धानरूपत्वात् । उपकरणभूतो द्विधा

१ ईदृशस्य कन्यकारत्नस्येदृश एव वरेऽभिलाषेण भवितव्यम् ।

स्वार्थसिद्धियुतः परार्थसिद्धिपरः। परार्थसिद्धिपरश्च पूर्वः पताका, अन्यः प्रकरीति । अत्र चाचेतन-चेतनानां मध्ये बीज-बिन्द्वोर्मुख्यत्वं सर्वव्यापित्वादिति ॥ २८ ॥

अथ बीजमाह—

स्तोकोद्दिष्टः फलप्रान्तो हेतुर्बीजं प्ररोहणात् ।

आदौ गम्भीरत्वादल्पनिक्षिप्तो मुख्यफलावसानश्च यो हेतुर्मुख्यसाध्योपायः स धान्यबीजवद् बीजम् । प्ररोहणादुत्तरत्र शाखोपशाखाऽऽदिभिर्विस्तरणात् । इदं चामुखानन्तरं निबध्यते । बीजं हि नाटकादीनामितिवृत्तार्थस्योपायः । आमुखं तु रूपकप्रस्तावनार्थं नटस्यैव वृत्तम् । याः पुनरत्र नाटकार्थस्पृशो नटोक्तयस्ताः प्रयोगपातनिकार्थमेव । अत एवामुखोक्ता अपि बीजोक्तयः प्रविष्टनाटकपात्रेण पुनरुच्यन्ते । तथा च रत्नावल्याम्—

" द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ "

इत्याद्यामुखोक्तं यौगन्धरायणः पठति ।

यथा वा सत्यहरिश्चन्द्रे—

" सत्त्वैकतानवृत्तीनां प्रतिज्ञातार्थकारिणाम् ।
प्रभविष्णुर्न देवोऽपि किं पुनः प्राकृतो जनः ? ॥ "

इत्यामुखोक्तं हरिश्चन्द्रः पठति ।

यथा वा अस्मदुपज्ञ एव यादवाभ्युदये—

" उदयाभिमुख्यमाजां सम्पत्त्यर्थं विपत्तयः पुंसाम् ।
ज्वलितानले प्रपातः कनकस्य हि तेजसो वृद्ध्यै ॥ "

इति नाटकपात्रं शुक्रमन्त्रः पठति ।

तत्र बीजं क्वचिद् व्यापाररूपम् । यथा रत्नावल्यां वत्सराजस्य रत्नावलीप्राप्तिहेतुरनुकूलदैवः सागरिकाऽन्तःपुरनिक्षेपादिर्यौगन्धरायणव्यापारः ।

क्वचित् तु व्यसननिवृत्तिफले रूपके व्यसनोपक्षेपरूपम् । यथा माया-पुष्पके शापः प्रविश्य वचनक्रमेणाह—

" कैकेयी क्व पतिव्रता भगवती क्वैवंविधं वाग्विषं !
धर्मात्मा क्व रघूद्वहः क्व गमितोऽरण्यं सजायानुजः ! ।
क्व स्वच्छो भरतः क्व वा पितृवधान्मात्राऽधिकं दह्यते !
किं कृत्वेति कृतो मया दशरथेऽवध्ये कुलस्य क्षयः ! ॥ "

क्वचिद् व्यसनाभ्युदययोरुपक्षेपरूपम् । यथा तापसवत्सराजे माणवकः—

" अमच्छो( च्चो ) चि एवं सामिणा अप्पणो पडिकूलमायरंतेण दढं आयासिदो । पत्थुदं च णेण रुम्मणमिस्सेहिं सह संपधारिय सामिभत्तीए मदिविहवस्स य अणुरुयं( वं ) " इत्यादीति ।

क्वचिद् व्यसनोपनिपाते तन्निवृत्त्युपक्रमरूपम् । यथा मुद्राराक्षसे चाणक्यः—

" आः ! क एष मयि स्थिते चन्द्रगुप्तमभिभवितुमिच्छति ? नन्दकुल-कालभुजगीं कोपानलबहलनीलधूमलतामद्यापि बध्यमानां बध्यः को नेच्छति शिखां मे ? । "

इत्यादि नायक-प्रतिनायकामात्याद्याश्रयेण विचित्ररूपो बीजोपन्यास इति ॥

अथ पताकां निरूपयति—

आविमर्शं पताका चेच्चेतनः स परार्थकृत् ॥ २९ ॥

स्वार्थाय प्रवृत्तो यो हेतुश्चेतनः परस्य प्रधानस्य प्रयोजनं सम्पादयति स प्रसिद्धि-प्राशस्त्यहेतुत्वात् पताकेव पताका । सुग्रीव-विभीषणादिर्हि रामादिनोपक्रियमाणो रामादेरात्मनश्चोपकाराय भवन् रामादेः प्रसिद्धिं प्रा-

---

१ अमात्योऽप्येव स्वामिनाऽऽत्मन प्रतिकूलमाचरता दृढमायासित । प्रस्तुत चानेन रुम्मणमिश्रै सह सम्प्रधार्य स्वामिभक्त्या मतिविभवस्य चानुरूपम् ।

शस्त्यं च सम्पादयति । चेदिति यदि फलसाधने साहाय्यापेक्षाणां नायकानां वृत्तं निबध्यते तदा पताका भवति, न तु स्वपराक्रमबहुमानिनामिति । एवं प्रकर्ययति । आविमर्शमिति यदा मर्यादायामाङ् तदाऽऽमुख-प्रतिमुखगर्भान्, यदा पुनरभिविधौ तदा विमर्शमाभिव्याप्य विरमति । तावत्येव पताका नायकस्य स्वफलसिद्धिर्निबध्यते । निर्वहणसन्धावपि तत्फले निबध्यमाने तुल्यकालयोरुपकार्योपकारकत्वाभावात् न तेन प्रधानस्योपकारः स्यात् । सिद्धफलस्त्वसौ प्रधानफल एव व्याप्रियमाणो भूतपूर्वगत्या पताका-शब्दवाच्य इति ॥ २९ ॥

अथ पताकाप्रस्तावात् पताकास्थानकानां सामान्यलक्षणं भेदांश्चाह—

चिन्तितार्थापरप्राप्तिर्वृत्ते यत्रोपकारिणी ।
पताकास्थानकं तत् तु चतुर्द्धा मण्डनं क्वचित् ॥ ३० ॥

अर्थः कर्म-करणव्युत्पत्त्या प्रयोजनमुपायश्च । अध्यवसितात् प्रयोजना-दुपायाच्चान्यस्य प्रयोजनस्योपायस्य च प्राप्तिर्यत्रेति वृत्ते उपकारिणी प्रधान-फलोपकारिका तदिति वृत्तं पताकास्थानकम् । उपकारित्वमात्रसाम्यात् पताकास्थानस्य तुल्यं पताकास्थानकम्, न पुनः पताकास्थानमेव । अत एव तुशब्दः पताकास्वरूपाद् व्यतिरेकं द्योतयति । मण्डनमिति एकमपि पताकास्थानकं नाट्य-काव्यस्यालङ्करणम्, किं पुनर्द्वे त्रीणि चत्वारि वा ? एतद्विहीनं रूपकं न कार्यमित्यर्थः । क्वचिदित्यन्तरान्तरा, न तु पताकावन्नि-रन्तरम् । अत एव पताकातो भिद्यते ॥ ३० ॥

अथाद्यभेदमाह—

सहसेष्टार्थलाभश्च

सहसेत्याकस्मिकत्वेन सभ्यानां चमत्कारहेतुत्वमाह । यथा रत्नाव-ल्याम्–सागरिकायां पाशावलम्बनप्रवृत्तायां वासवदत्तेति मन्यमानो राजा पाशाद् विमोचयति तदा तदुक्त्या सागरिकां प्रत्यभिज्ञायाह—

" कथं मे प्रिया सागरिका ? अलमलमतिमात्रेण । " इत्यादि ।

अत्रान्यत् प्रयोजनं चिन्तितम्, वैचित्र्यकारि च प्रयोजनान्तरं सम्पन्नम् ।

यथा वा नलविलासे विदूषक–कापालिकनियुद्धनिवारणायोद्यतस्य राज्ञो दमयन्तीप्रतिकृतिलाभ इति ।

अन्यस्मिन्नुपाये चिन्तिते सहसोपायान्तरप्राप्तिर्यथा नागानन्दे जीमूतवाहनस्य शङ्खचूडादप्राप्तवध्यपटस्य कञ्चुकिना वासोयुगलार्पणमिति ॥

अथ द्वितीयमाह—

श्लिष्टसातिशया च वाक् ।

श्लिष्टा प्रकृतसम्बद्धा सातिशयाऽत्यद्भुतार्था । यथा रामाभ्युदये द्वितीयेऽङ्के सीतां प्रति सुग्रीवस्य सन्देशोक्तिः—

" बहुनाऽत्र किमुक्तेन ? पारेऽपि जलधेः स्थिताम् ।
अचिरादेव देवि ! त्वामाहरिष्यति राघवः ॥ "

अत्र पारेऽपि जलधेरित्यतिशयोक्तिरपि सीतां प्रति तथैव वृत्तत्वात् प्रकृतसम्बद्धा । अत्र चातिशयोक्तिमात्राचिन्तितात् प्रयोजनादपरं तथैव सीताहरणं प्रयोजनं सम्पन्नमिति सामान्यलक्षणम् ॥

अथ तृतीयमाह—

द्व्यर्था च

वागितीहोत्तरत्र च सम्बध्यते । द्व्यर्था श्लेषादिवशात् प्रस्तुतोपयोग्यर्थान्तरोपक्षेपिणी । यथा—" प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोवि(रि)वोदीक्षते " । अत्र हि सन्ध्यावर्णनप्रयोजनेन काव्यं प्रयुक्तं सागरिकां प्रत्युदयनाभिव्यक्तिलक्षणं प्रयोजनान्तरं सम्पादयति । तथा च " सागरिका—

अयं सो राया उदयणो जस्स अहं तादेण दिन्ना " इति ॥

अथ चतुर्थमाह—

अप्रकटे श्लिष्ट–स्पष्ट–प्रत्यभिधाऽपि च ॥ ३१ ॥

अप्रकटे प्रत्युत्तरकारकेणाविज्ञातेऽर्थे केनचिदुपक्षिप्ते सति श्लिष्टमन्या-

---

१ अयं स राजोदयनो यस्मा अहं तातेन दत्ता ।

भिप्रायप्रयुक्तमपि प्रस्तुतसम्बद्धं स्पष्टं विशेषनिश्चयकारि यत् प्रत्यभिधानं प्रत्युत्तरं तद्रूपा च वागिति । यथा मुद्राराक्षसे—

"चाणक्यः-अपि नाम दुरात्मा राक्षसो गृह्येत।"

एवमस्फुटेऽर्थे उपक्षिप्ते "(प्रविश्य) सिद्धार्थकः-अय्य ! गहिदो" इति प्रत्युत्तरं प्रस्तुतार्थसम्बद्धं विशेषनिश्चयकारि च । अत एव पुनः "चाणक्यः-( सहर्षमात्मगतम् ) हन्त ! गृहीतो दुरात्मा राक्षसः" इति । इदं प्रत्युत्तरं सन्देशग्रहण-ज्ञापनप्रयोजनेन प्रयुक्तं चाणक्यस्य राक्षसग्रहं निश्चाययतीति सामान्यलक्षणमिति ।

प्रत्येकं चकारश्चतुर्णामपि नाटकं प्रति प्राधान्यख्यापनार्थ इति ॥३१॥

अथ प्रकरीलक्षणमाह—

प्रकरी चेत् क्वचिद् भावी चेतनोऽन्यप्रयोजन ।

क्वचिद् भावी वृत्तैकदेशव्यापी अन्यस्य मुख्यनायकस्यैव प्रयोजनं यस्य स चेतन. सहकारी प्रकर्षेण स्वार्थानपेक्षया करोतीति प्रकरी । उ(औ)णादिके इप्रत्यये संज्ञाशब्दत्वेन स्त्रीत्वम् । यथा रामप्रबन्धेषु जटायुः । चेदित्यनेन पताकावदनयस्यम्भावित्वमाह । क्वचिद्भावित्वात् स्वार्थनिरपेक्षत्वाच्च पताकातो भेद इति ॥

अथ बिन्दुं लक्षयति—

हेतोश्छेदेऽनुसन्धान बहूना बिन्दुराफलात् ॥ ३२ ॥

उपायानुष्ठानस्यावश्यकर्तव्यादिना व्यवधाने सति नायक-प्रतिनायकामात्यादीनां यदनुसन्धानं ज्ञानमसौ ज्ञानविचारणफललाभोपायत्वाद् बिन्दुः । सर्वव्यापित्वाद् वा जले तैलबिन्दुरिव बिन्दुः । आफलादिति बीजवत् समस्तेतिवृत्तव्यापकत्वमाह । केवलं बीजं मुखसन्धावेव प्रभृति निबध्यते, बिन्दुस्तु तदनन्तरमिति । इह तावन्नायक-सहायोभयेभ्यस्त्रिधा फलसिद्धिः । तत्र सर्वेषामपि स्वस्वव्यापारविच्छिचावनुसन्धानात्मा बिन्दुर्निबध्यते । यथा च नायकेन प्रतिपक्षेतिवृत्तमनुसन्धीयते, तथा प्रतिपक्षेणापि नायकस्येति-

१ आर्य ! गृहीत ।

वृत्तमनुसन्धीयते। अत एव बहूनामित्युपात्तम्। नायकस्य बिन्दुर्यथा अस्मदुपज्ञे राघवाभ्युदये पञ्चमेऽङ्के सुग्रीवचरितश्रवणेनातपि(पति)ते सीतापहारदुःखे सीतां स्मृत्वा रामः--

" कलत्रमपि रक्षितुं निजमशक्तमात्मान्वय-
प्रसूतमभिवीक्ष्य मामहह! जातलज्जाज्वरः।
प्रकाशयितुमक्षमः क्षणमपि स्वमास्यं जने
प्रयाति चरमोदधौ पतितुमेष देवो रविः॥ "

इत्यनेन पुनः सीतापहारदुःखमनुसंहितमिति।

यथा वा तापसवत्सराजे मृगयाऽऽदिभिरन्यैश्चामात्यव्यापारैर्वत्सराजस्य विच्छिन्नेऽपि प्रियासमागमौत्सुक्यरूपे प्रयोजने द्वितीयेऽङ्के राजा वासवदत्तां दग्धामुपश्रुत्याह- " रुमण्वा(न्व)न्! मुञ्च मुञ्च।

क्षुद्राग्नेरमुतोऽपि धूमकलुषात् क्षिप्रस्थितेः सर्वतो
ज्वालाताण्डवकारिणः किमपरं भीतोऽसि भाग्यैर्मम।
अन्तर्बद्धपदं न पश्यसि सखे! शोकानलं तेन मा-
मेवं वारयसि प्रियाऽनुसरणात् पापः करोम्यत्र किम्?॥ "

इति वासवदत्तायामाग्रहविशेषात् तदेवानुसंहितम्। एवमत्रोत्तरेष्वप्यङ्केषु नायकस्य बिन्दुर्निबद्धोऽस्ति। एवं सहायोभयविपक्षाणामपि स्वव्यापारानुसन्धानात्मा बिन्दुर्द्रष्टव्यः॥ ३२॥

अथ कार्यं विवृणोति--

साध्ये बीजसहकारी कार्यम्

प्रधाननायक-पताकानायक-प्रकरीनायकैः साध्ये प्रधानफलत्वेनाभिप्रेते बीजस्य प्रारम्भावस्थोत्क्षिप्तस्य प्रधानोपायस्य सहकारी सम्पूर्णतादायी सैन्य-कोश-दुर्ग-सामाद्युपायलक्षणो द्रव्य-गुण-क्रियाप्रभृतिः सर्वोऽर्थश्चेतनैः कार्यते फलमिति कार्यम्। अयमत्रोपायानां निबन्धसङ्क्षेपः सहायानपेक्षाणां नायकानां वृत्ते बीज-बिन्दु-कार्याणि त्रय एवोपायाः, सहायापेक्षाणां तु पताका-प्रकरीभ्यामन्यतरया वा सह पञ्च चत्वारो वेति॥

अथामीषां मुख्यत्वव्यवस्थायां हेतुमाह—

कार्यैस्तु मुख्यता ।

कार्यैः फलं प्रत्युपकारविशेषैः पुनर्बीजादीनां मुख्यता बाहुल्यं प्राधान्यं वा निबन्धनीयम् । तत्र बीज-बिन्द्वोस्तावन्मुख्यत्वमेव सर्वव्यापित्वात् । पताका-प्रकरी-कार्याणां तु मुख्यफलं प्रत्युपयोगापेक्षया एकस्य द्वयोस्त्रयाणां वा मुख्यत्वमन्येषां चामुख्यत्वम् । तत्र पताकाया मुख्यत्वं यथा-श्रीशूद्रकविरचितायां मृच्छकटिकायां पूर्वोपकारोपगृहीतस्यार्यकस्य । प्रकर्या यथा-वीरनागनिबद्धायां कुन्दमालायां सीतायास्तदपत्ययोश्च पालन-संयोजनाभ्यां स्वफलनिरपेक्षस्य वाल्मीकेः । उभयोर्यथा-रामप्रबन्धेषु सुग्रीव-विभीषणयोर्जटायु-हनूमदङ्गदादीनां च । पताका-प्रकर्योरल्पत्वेऽभावे वा सर्वत्र कार्यस्य मुख्यत्वमिति ॥

अथ पताकायाः प्रधानत्वे समर्थिते सन्धिप्रसङ्गं निरस्यति—

पताकायाः प्रधानत्वेऽनुसन्धिः सूचनाऽऽदिभिः ॥ ३३ ॥

पताकावृत्तस्य प्राधान्यनिबन्धेऽपि अनुसन्धिर्मुख्यवृत्तसन्ध्यनुगतः सन्धिर्भवति गौणः सन्धिरित्यर्थः । यद्यपि पताकायाः प्रधानत्वे मुख्येतिवृत्तवत् सन्धयः स्युस्तथापि तेऽनुसन्धयो मुख्यसन्ध्युपयोगित्वेन गौणत्वात् । अपरथा पताकावृत्तस्य प्रासङ्गिकत्वं न स्यात्, सन्धिसङ्ख्यावृद्धिश्च स्यात् । अत एव ते सूचनाऽऽदिभिर्भवन्ति । आदिशब्दात् क्वचिदूह्यन्ते, लेशतो निबध्यन्ते च, न च मुख्यसन्धिभ्यः पृथग् गण्यन्ते । अनुसन्धिरिति एकवचनमविवक्षितम्, मुख-निर्वाहयोरवश्यम्भावित्वात्; तेन द्विप्रभृतयोऽनुसन्धयो भवन्ति । यथा मायापुष्पके—

" दुर्गं भूमिरमात्य-भृत्य-सुहृदो दाराः शरीरं धनं
मानो वैरिविमर्द-सौख्यममरप्रख्येण सख्योन्नतिः ।
यस्मात् सर्वमिदं प्रियाविरहिणस्तस्याद्य शक्ता वयं
न स्वेच्छासुलभैः पयोऽपि घटने शैलामखण्डैरपि ॥ "

अत्र मुखादिसन्धिनिबन्धनीयं रामेण सह मैत्र्यादिकमभ्यूह्यमुपकल्प्य

सुग्रीववचनाद् रामशक्तिसम्पन्नाभ्युदयं निर्वहणस्यैव वृत्तमुपनिबद्धमिति। यथा वा राघवाभ्युदये—

" मित्रं दर्शनमात्रतोऽपि गणितः किष्किन्धमागत्य च
क्षुण्णः क्षुद्रमतिः स साहसगतिर्दत्ता सतारा मही।
इत्थं तेन वितन्वता न विहितं देवेन रामेण किं ?
तत् सत्यं मम तस्य कर्तुमुचितं प्राणैरपि प्रीणनम् ॥ "

अत्र मित्रमित्यादिना मुखम्, किष्किन्धेत्यादिना प्रतिमुखम्, क्षुण्णेत्यादिना विमर्शः, दत्ता सतारा महीति निर्वहणं सुग्रीववचनाद् प्रकाशितम्। उत्तरार्धेन तु मुख्यनायकानुयायित्वदर्शनादनुसन्धित्वं ख्यापितमिति। प्रकर्यास्तु प्राधान्येऽपि स्वल्पवृत्तत्वात् सन्ध्यनुसन्धिचिन्तैव नास्तीति ॥ ३३ ॥

अथ उपायानन्तरमुपदिष्टां दशां लक्षयितुं तद्भेदानुदिशति—

आरम्भ–यत्न–प्राप्त्याशा–नियताप्ति–फलागमाः।
नेतुर्वृत्ते प्रधाने स्युः पञ्चावस्था ध्रुवं क्रमात् ॥ ३४ ॥

नेतुर्मुख्यफलं प्रति बीजाद्युपायान् प्रयोक्तुरवस्थाः प्रधानवृत्तविषये काय–वाङ्–मनसां व्यापाराः। ध्रुवमिति प्रधाने वृत्ते पञ्चानामवश्यम्भावमाह, तेन प्रासङ्गिके त्वादयोऽनुसन्धिवद् गौणाश्च भवन्ति। नाटकलक्षणप्रस्तावान्नाटके नाटकलक्षणानुसारिषु प्रकरण–नाटिका–प्रकरणीषु चायं नियमः। तेन व्यायोगादौ यथालक्षणं न्यूनावस्थत्वमपि न दोषाय। क्रमादिति उद्देशोक्तक्रमेणैव निबध्यन्ते, नोपायवत् क्रमाक्रमाभ्याम्। प्रेक्षापूर्वकारिणां हि प्रथममारम्भस्ततः प्रयत्नस्ततः सम्भावना ततो निश्चयस्ततः फलप्राप्तिरित्ययमेव क्रम इति ॥ ३४ ॥

अथारम्भं व्युत्पादयति—

फलायौत्सुक्यमारम्भः

फलं मुख्यं साध्यं तदर्थमौत्सुक्यमुपायविषयमनेनोपायेनैतत् सिध्यतीति

स्मरणोत्कण्ठाऽऽदिकर्म तदनुगुणो व्यापारश्चोभयमारम्भः। उपायविषयमौत्सुक्यमौत्सुक्यानुगुणो व्यापारश्चारम्भावस्थेत्यर्थः।

यथा वेणीसंहारे प्रथमेऽङ्के सहदेवं प्रति—

" भीमः—अथ भगवान् कृष्णः केन पणेन सुयोधनं प्रति सन्धिं कर्तुं प्रहितः ?

सहदेवः—आर्य ! ननु पञ्चभिर्ग्रामैः। " इत्यादि।

यथा वा नलविलासे प्रथमेऽङ्के–" नेपथ्ये तूर्यध्वनिः।

कलहंसः—देव ! युगादिदेवदेवताय[त]नसन्ध्यावलिपटहध्वनिरयम्।

राजा—(स्वगतम्) अहो ! परमं शकुनम्। (पुनर्विमृश्य) प्रेषयाम्येतं कलहंसं दमयन्त्याः पार्श्वे। एषा च मकरिका विदर्भभाषा–वेषाचारकुशला सहैव यातु। " इत्यादीति।

एतासु चावस्थासु नायक–सहाय–प्रतिपक्ष–दैवव्यापाराणामन्यतमस्य द्वयोस्त्रयाणां चतुर्णां चैकस्यां द्वयोस्तिसृषु चतसृषु पञ्चस्वपि च यथायथमुन्मीलने वृत्तिः। फलयोगस्तु मुख्यनायकस्यैव। न च दैवात् कर्मणः प्रारम्भाद्युन्मीलने मानुषकर्माभावान्नाटकस्याव्युत्पत्तिहेतुत्वम्। दैव–मानुषव्यापारयोः परस्परापेक्षयैव शुभाशुभफलसाधकत्वात्। दैवादप्यर्थं पश्यन्तः पुण्यमुपचेतुं मानुषे कर्मणि प्रवर्तेरन्। उपभोगाच्च क्षीयमाणमननुकूलं दैवं प्रति विहितप्राणात्ययाः प्रतीक्षेरन्निति सर्वत्र दैवस्य मानुषव्यापारापेक्षित्वाद् दैवायत्तफलान्यपि रूपकाणि सामाजिकानां बुद्धिसंस्काराय निबन्धनीयानि। यथा पुष्पदूषितकं मृच्छकटिका चेति।

अथ प्रयत्नमाह—

प्रयत्नो व्यापृतौ त्वरा।

मुख्यफलोपायव्यापारणे त्वराऽनेनोपायेन विना फलं न भवतीति निश्चयेन परमौत्सुक्यं प्रकर्षेण यत्नः प्रयत्नः। औत्सुक्यमात्रमारम्भः, परमौत्सुक्यं तु प्रयत्न इत्यर्थः। यथा रत्नावल्याम्—

"तद्दा वि नत्थि अन्नो दंसणोवाउ त्ति जहा तहा आलिहिय जधासमीहिदं करइस्सं।" इत्यादि।

यथा वा नलविलासे तृतीयेऽङ्के—

"राजा—(सत्वरम्) मकरिके! प्रभवसि राजपुत्रीमिह समानेतुम्?

मकरिका—अहं दाव पयतिस्सं। आगमणं उण दिव्वस्स आयत्तं।

राजा—तर्हि यतस्व।" इत्यादीति॥

अथ प्राप्त्याशां विपश्चयति—

फलसम्भावना किञ्चित् प्राप्त्याशा हेतुमात्रतः ॥३९॥

मात्रशब्देन फलान्तरयोगः प्रतिबन्धनिश्चयश्च [व्य]वच्छिद्यते। फलान्तरासम्बन्धादनिश्चितबाधकाभावाच्चोपायादीषत् प्रधानफलस्य या सम्भावना न तु निश्चयः सा प्राप्तेः प्रधानफललाभस्याशा प्राप्त्याशा।

यथा वेणीसंहारे तृतीयेऽङ्के भीमः—

कृष्टा येन शिरोरुहेषु पशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरान्तरगतः संरक्ष्यतां कौरवाः!॥"

इत्यत्र दुःशासनवधादशेषकौरववधसम्भावनेन युधिष्ठिरस्य राज्यप्राप्तिसम्भवः।

यथा वा नलविलासे चतुर्थे स्वयंवराङ्के—

"नलः—कलहंस! मकरिके! फलितः स एष वां प्रयासः।

कलहंसः—देव! नावयोः प्रयासः, किन्तु देवस्य स्वप्नः।

नलः—समभूदिदानीं स्वप्नार्थप्रत्याशा।" इति॥ ३५॥

---

१ तथापि नास्त्यन्यो दर्शनोपाय इति यथा तथाऽऽलिख्य यथासमीहितं करिष्ये।

२ अहं तावत् प्रयतिष्ये, आगमनं पुनर्दैवस्यायत्तम्।

स्मरणोत्कण्ठाऽऽदिकर्म तदनुगुणो व्यापारश्चोभयमारम्भः। उपायविषयमौत्सुक्यमौत्सुक्यानुगुणो व्यापारश्चारम्भावस्थेत्यर्थः।

यथा वेणीसंहारे प्रथमेऽङ्के सहदेवं प्रति—

" भीमः—अथ भगवान् कृष्णः केन पणेन सुयोधनं प्रति सन्धिं कर्तुं प्रहितः ?

सहदेवः—आर्य! ननु पञ्चभिर्ग्रामैः।" इत्यादि।

यथा वा नलविलासे प्रथमेऽङ्के–" नेपथ्ये तूर्यध्वनिः।

कलहंसः—देव! युगादिदेवदेवतायत[त]नसन्ध्यावलिपटहध्वनिरयम्।

राजा—(स्वगतम्) अहो! परमं शकुनम्। (पुनर्विमृश्य) प्रेषयाम्येतं कलहंसं दमयन्त्याः पार्श्वे। एषा च मकरिका विदर्भभाषा-वेषाचारकुशला सहैव यातु।" इत्यादीति।

एतासु चावस्थासु नायक-सहाय-प्रतिपक्ष-दैवव्यापाराणामन्यतमस्य द्वयोस्त्रयाणां चतुर्णां चैकस्यां द्वयोस्तिसृषु चतसृषु पञ्चस्वपि च यथायथमुन्मीलने वृत्तिः। फलयोगस्तु मुख्यनायकस्यैव। न च दैवात् कर्मणः प्रारम्भाद्युन्मीलने मानुषकर्माभावान्नाटकस्याप्युत्पत्तिहेतुत्वम्। दैव-मानुषव्यापारयोः परस्परापेक्षयैव शुभाशुभफलसाधकत्वात्। दैवादप्यर्थं पश्यन्तः पुण्यमुपचेतुं मानुषे कर्मणि प्रवर्तेरन्। उपभोगाच्च क्षीयमाणमननुकूलं दैवं प्रति विहितप्राणात्ययाः प्रतीक्षेरन्निति सर्वत्र दैवस्य मानुषव्यापारापेक्षित्वाद् दैवायत्तफलान्यपि रूपकाणि सामाजिकानां बुद्धिसंस्काराय निबन्धनीयानि। यथा पुष्पदूषितकं मृच्छकटिका चेति।

अथ प्रयत्नमाह—

प्रयत्नो व्यापृतौ त्वरा।

मुख्यफलोपायव्यापारणे त्वराऽनेनोपायेन विना फलं न भवतीति निश्चयेन परमौत्सुक्यं प्रकर्षेण यत्नः प्रयत्नः। औत्सुक्यमात्रमारम्भः, परमौत्सुक्यं तु प्रयत्न इत्यर्थः। यथा रत्नावल्याम्—

"तहा वि नत्थि अन्नो दंसणोवाउ त्ति जहा तहा आलिहिय जधा-समीहिदं करइस्सं।" इत्यादि।

यथा वा नलविलासे तृतीयेऽङ्के—

"राजा—(सत्वरम्) मकरिके! प्रभवसि राजपुत्रीमिह समानेतुम्?

मकरिका—अहं दाव पयतिस्सं। आगमणं उण दिव्वस्स आयत्तं।

राजा—तर्हि यतस्व।" इत्यादीति॥

अथ प्राप्त्याशां विपश्चयति—

फलसम्भावना किञ्चित् प्राप्त्याशा हेतुमात्रतः॥३६॥

मात्रशब्देन फलान्तरयोगः प्रतिबन्धनिश्चयश्च [व्य]वच्छिद्यते। फलान्तरासम्बन्धादनिश्चितबाधकाभावाच्चोपायादीषत् प्रधानफलस्य या सम्भावना न तु निश्चयः सा प्राप्तेः प्रधानफललाभस्याशा प्राप्त्याशा।

यथा वेणीसंहारे तृतीयेऽङ्के भीमः—

कृष्टा येन शिरोरुहेषु पशुना पाञ्चालराजात्मजा
येनास्याः परिधानमप्यपहृतं राज्ञां गुरूणां पुरः।
यस्योरःस्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरान्तरगतः संरक्ष्यतां कौरवाः!॥"

इत्यत्र दुःशासनवधादशेषकौरववधसम्भावनेन युधिष्ठिरस्य राज्यप्राप्तिसम्भवः।

यथा वा नलविलासे चतुर्थे स्वयंवराङ्के—

"नलः—कलहंस! मकरिके! फलितः स एष वां प्रयासः।

कलहंसः—देव! नावयोः प्रयासः, किन्तु देवस्य स्वमः।

नलः—समभूदिदानीं स्वमार्थप्रत्याशा।" इति॥३५॥

अथ नियताप्तिं स्पष्टयति—

नियताप्तिरुपायाना साकल्यात् कार्यनिर्णयः ।

प्रधानफलहेतूनां प्रतिबन्धकाभावेन सकलसहकारिसम्पत्त्या कार्यस्य प्रधानफलस्य निर्णयो भविष्यत्येवेति निश्चयो नियता फलाव्यभिचारिण्याप्तिर्नियताप्तिः ।

यथा वेणीसंहारे—

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम् ।
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः
क्वास्ते दुर्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥ "

इत्यादिना भीमार्जुनाभ्यामेकशेषदुर्योधनान्वेषणान्नियताप्तिर्दर्शिता ।

यथा वा राघवाभ्युदये षष्ठेऽङ्के—

"सुग्रीवः-(जाम्बवन्तं प्रति) अमात्य ! भवतु यादृशस्तादृशो वा स पारदारिको राक्षसस्तथापि देवपादानां वध्यः ।

रामः—(सीताऽपहारं स्मृत्वा सगर्व-विषादम्) कपिराज ! प्रतिराजविक्रमयामिनीतपनोदये भवति सहाये सति ।

निहत्य दशकन्धरं सह विपक्षरक्षःकथा-
प्रथाभिरधिसङ्गरं जनकजां ग्रहीष्ये ध्रुवम् ।
शशाक न स रक्षितुं रघुपतिः परेभ्यः प्रिया-
मयं तदपि सम्भवी चिरमकीर्तिकोलाहलः ॥ " इति ॥

अथ फलागमं निरूपयति—

साक्षादिष्टार्थसम्भूतिर्नायकस्य फलागमः ॥ ३६ ॥

साक्षात् समनन्तरं, न तु दानादिभ्यः स्वर्गादिफलमिव जन्मान्तरभाविनी इष्टस्याभिप्रेतस्य अर्थस्य प्रयोजनस्य सम्यक् पूर्णत्वेन भूतिरुत्पत्तिः। फलस्यागम

आगमारम्भो न पुनरागतत्वम्। इह फलस्योत्पत्त्यावेशः पञ्चम्यवस्था। उत्पत्तनस्य तु नायकेन यः सम्भोगस्तत् प्रबन्धस्य मुख्यं साध्यम्। अत एव फले साध्ये नायकस्य पञ्चावस्थाः सङ्गच्छन्ते। नायकस्येत्यनेन चावस्थान्तराणि सचिव-नायिका–विपक्ष–दैवादिव्यापारैरपि निबध्यन्ते इत्युक्तं भवति। तानि तु तथा निबद्धान्यपि फलतो नायक एव पर्यवस्यन्ति। अत एव रत्नावल्याम्-"प्रारम्भेऽस्मिन् स्वामिनो वृद्धिहेतौ" इत्यादि स्वामिगतत्वेनैव यौगन्धरायणेनोक्तम्। फलागमः पुनर्नायकस्यैव निबध्यते।

यथा वेणीसंहारे षष्ठेऽङ्के—

भूमौ क्षिप्त्वा शरीरं निहितमिदमसृक् चन्दनाभं मया(मा)ङ्गे
लक्ष्मीरार्ये निषण्णा चतुरुदधिपयःसीमया सार्धमुर्व्या।
भृत्या मित्राणि योधाः कुरुबलमनुजा दग्धमेतद् रणाग्नौ
नामैकं यद् ब्रवीषि क्षितिप! तदधुना धार्त्तराष्ट्रस्य शेषम्॥"

इत्यनेन दुर्योधनं हत्वा भीमसेनेन युधिष्ठिरराज्यसमर्पणफलयोगो दर्शितः।

यथा वा राघवाभ्युदये रामः—

"वैदेहीं हृतवांस्तदेष महतः सङ्ख्ये विपद्य क्षमां–
श्चक्रोत्पाटितकन्धरो दशमुखः कीनाशदासीकृतः।
प्राणान् यद्विरहेऽप्यहं विधृतवांस्तेन त्रपासुन्दरं
वक्त्रं दर्शयितुं तथापि न पुरस्तस्या विलक्षः क्षमः॥" इति।

इह च तावत् पुरुषकारमात्राभिनिवेशिनां दैवमपाकुर्वतां नास्तिकानां दैवबहुमानव्युत्पत्तये पुरुषकारोऽप्यफलस्तदभावोऽपि सफल इति दर्शनीयम्। ततो दैवायत्तफले दरिद्रचारुदत्तादिरूपके पुरुषव्यापारस्य गौणत्वात् कथं प्रारम्भादयः स्युः?। न, तत्रापि नायकस्य फलार्थित्वात्, फलस्य च प्रारम्भादिनान्तरीयकत्वात्। अनुप्तान्यपि हि सस्यानि वृष्टिसेकाप्यायितायां भुवि उच्छूनताऽङ्कुरोद्भेद—स्तम्बभवन—पुष्पोद्गमक्रमेणैव फलन्ति। यद्यपि हि सेवाऽऽद्यशेषव्यापारान्विमुखः पुरुषो न व्याम्रियते, तथापि

दैवप्रेरितो राजादिर्व्याप्रियत एव। स च राजादिगतो व्यापारः पुरुषगत एव, तद्व्यापारसाध्यफलार्थित्वात्। अपरथा परतः प्राप्तमपि फलं नाङ्गीकुर्यादिति ॥ ३६ ॥

अथ दशाऽनन्तरमुद्दिष्टान् व्याख्यातुं सन्धीनुत्क्षिपति—

मुखं प्रतिमुखं गर्भामर्श–निर्वहणान्यमी।

सन्धयो मुख्यवृत्तांशाः पञ्चावस्थानुगाः क्रमात् ॥ ३७ ॥

मुख्यस्य स्वतन्त्रस्य महावाक्यार्थस्यांशा भागाः परस्परं स्वरूपेण चाङ्गैः सन्धीयन्त इति सन्धयः अवस्थाभिः प्रारम्भादिभिरनुगता अनुयाता अवस्थासमाप्तौ समाप्यन्त इत्यर्थः। अवस्थानां च ध्रुवभावित्वात् सन्धयोऽपि नाटक–प्रकरण–नाटिका–प्रकरणीषु पञ्चावश्यम्भाविनः। समवकारादौ तु विशेषोपादानादूनत्वेऽपि न दोषः। क्रमादिति मुखाद्युद्देशक्रमेणावस्थाक्रमेण च निबध्यन्ते। इह तावत् प्रबन्धनिबन्धनीयोऽर्थोऽवस्थाभेदेन पञ्चभिर्भागैः परिकल्प्यते। एकैकश्च भागो द्वादश त्रयोदशेत्यादिरूपयाऽङ्गसङ्ख्यया विभज्यते। प्रासङ्गिकवृत्तसन्धयस्तु मुख्यसन्ध्यनुयायित्वादनुसन्धय एवेत्युक्तमेवेति ॥ ३७ ॥

अथ मुखं लक्षयितुमाह—

मुखं प्रधानवृत्तांशो बीजोत्पत्तिरसाश्रयः।

प्रारम्भावस्थाभावित्वात् प्रधानवृत्तस्य भागो मुखमिव मुखम्। बीजोत्पत्तेर्मुख्योपायोपक्षेपस्य रसानां च शृङ्गारादीनामाश्रयोऽवतरणं यत्र। प्रारम्भोपयोगी यावानर्थराशिः प्रसक्तानुप्रसक्त्या विचित्ररससन्निवेशस्तावान् मुखसन्धिरित्यर्थः। यथा रत्नावल्यां प्रथमोऽङ्कः। अत्र हि सागरिकाराजदर्शनरूपे अमात्यप्रारम्भविषयीकृतेऽर्थराशौ अमात्ययौगन्धरायणस्य पृथ्वीसाम्राज्यविजिगीषोर्वीरः, वत्सराजस्य वसन्तविभावः शृङ्गारः, पौरप्रमोदावलोकनादद्भुतः, तत उद्यानगमनादारभ्य पुनः शृङ्गार इति। यथा वा सत्यहरिश्चन्द्रे प्रथमोऽङ्कः। तत्र हि कुलपतिप्रारम्भविषयीकृते पृथिवीसुवर्णदानाभ्युपगमरूपेऽर्थराशौ राज्ञः प्रथमं महावराहदर्शनेऽद्भुतः,

प्रहतहरिणीदर्शने करुणः, पुनराश्रमदर्शनेऽद्भुतः, हरिणीवधश्रवणक्रुद्धस्य कुलपते रौद्रः, ततः पृथिवीसुवर्णदानाभ्युपगमे राज्ञो दानवीर इति । रसप्राणो नाट्यविधिरिति रसाश्रयत्वमुत्तरसन्धिष्वपि द्रष्टव्यमिति ।

अथ प्रतिमुखं व्याचष्टे—

प्रतिमुखं कियल्लक्ष्यबीजोद्घाटसमन्वितः ॥ ३८ ॥

प्रधानवृत्तांश इहोत्तरेषु च स्मर्यते । कियल्लक्ष्यस्य मुखसन्धौ गम्भीरत्वेन न्यस्तत्वादीषत्प्रकाशस्य बीजस्य प्रधानोपायस्योद्घाटेन प्रबलप्रकाशनेन सम्यगनुगतः प्रयत्नावस्थापरिच्छिन्नो यः प्रधानवृत्तांशः स मुखस्याभिमुख्येन वर्तत इति प्रतिमुखम् । 'द्वीपादन्यस्मादपि' इत्यादिना ह्यमात्येन सागरिकाचेष्टितरूपं बीजं मुखसन्धौ न्यस्तं वसन्तोत्सव–कामदेवपूजाऽऽदिना तिरोहितत्वादीषल्लक्ष्यम् । तस्य च सुसङ्गतारचितराज–सागरिकासमागमेन द्वितीयाङ्के उद्घाट इति ॥ ३८ ॥

अथ गर्भं व्याख्यातुमाह—

बीजस्यौन्मुख्यवान् गर्भो लाभालाभगवेषणैः ।

उत्पत्त्युद्घाटनदशाद्वयाविष्टस्य बीजस्यौन्मुख्यं फलजननाभिमुख्यं तद्वान् । प्राप्त्याशया तृतीयावस्थया परिच्छिन्नो लाभालाभगवेषणैः पुनः पुनर्भवद्भिर्युक्तः प्रधानवृत्तांशो गर्भसन्धिः । यथा वेणीसंहारे तृतीय–चतुर्थ–पञ्चमेष्वङ्केषु । नेपथ्ये फलसाधकानां पाण्डवानां वृत्ते भीमसेनेन 'कृष्टा येन शिरोरुहेषु पशुना' इत्यादिना प्रतिज्ञानिर्वहणोपक्रमात् विजयानुगुण्यलाभेन बीजस्यौन्मुख्यं दर्शितम् । तथा 'भगदत्तलुहिलकुम्भके' इत्यादिना राक्षसीमुखसूचितेन प्रधानयोधवधेन '[2]एशे षु (खु)धिट्ठज्जुण्णेणं केशेषु गिण्हिय दोणे वावायीअदि' इत्यादिना राक्षसमुखसूचितेन च सेनापतिवधेन स्वबलक्षोभकारिणा कर्णाश्वत्थाम्नोः कलहेन च दुर्योधनस्य विजयालाभलक्षणं पाण्डववृत्ते फलानुगुणं बीजस्यौन्मुखं( ख्यम् ) तथा–'आः शक्तिरस्ति वृकोदरस्य

१ भगदत्तरुधिरकुम्भकः ।

२ एष खलु धृष्टद्युम्नेन केशेषु गृहीत्वा द्रोणो व्यापाद्यते ।

मयि जीवति वत्सस्य छायामप्याक्रमितुम्' इति योद्धुं निष्क्रान्तेन दुर्योधनेन विजयान्वेषणरूपं औन्मुख्यम् । तथा—

"राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य मिषतः कर्णस्य शल्यस्य च ।
पीतं तस्य मयाऽद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग् वक्षसः ॥"

इत्यादिना भीमसेनेन दुःशासनवधात् विजयलाभरूपमौन्मुख्यम् । एवमत्र पुनःपुनर्लाभालाभगवेषणैर्बीजस्यौन्मुख्यं दर्शितम् । अत एव फलप्राप्तिसम्भावनारूपो गर्भसन्धिरुच्यते । एवं शृङ्गारादिप्रधानेष्वपि रूपकेषु लाभालाभगवेषणानि दर्शनीयानि । इह गर्भसन्धावप्राप्त्यंशः प्रधानं(न)फलसम्भावनाऽऽत्मकत्वात्, अन्यथा फलनिश्चयात्मक एव स्यात् । अवमर्शसन्धौ तु प्राप्त्यंशः प्रधानं(न)फलनिश्चयरूपत्वादिति विशेषः । इति ॥

अथावमर्शमाह—

उद्भिन्नसाध्यविघ्नात्मा विमर्शो व्यसनादिभिः ॥ ३९ ॥

बीजस्योत्पत्त्युद्घाट-फलौन्मुख्यैरुद्भिन्नं भवनाभिमुखं यत् साध्यं प्रधानफलं तद्विघ्नात्मा(प्र)त्यूहहेतुसम्पातात्मा नियताप्तिचतुर्थ्यवस्थापरिच्छिन्नः प्रधानवृत्तांशः । विमृशति स्खलदन्तरायहेतुसम्पात(त) प्रत्यासन्नमपि साध्यं प्रति सन्देग्धि नेताऽस्मिन्निति विमर्शः । नियतफलाप्त्यवस्थया व्याप्तत्वेऽप्यस्य सन्धेः सम्भावनानन्तरं सन्देहस्याप्राप्तावपि च फलं प्रति जनक-विघातकयोस्तुल्यबलत्वात् सन्देहात्मकत्वम् ' विघ्नैरपि हन्यमानाश्च महात्मानो विशेषतो यतन्ते ' इति तत्त्वतो नियतफलाप्तिरूपत्वम् । 'श्रेयांसि बहुविघ्नानि भवन्ति ' इति विघ्नहेतुसम्पातेऽपि प्रत्यासन्नवर्तिनि फले न निवर्तनीयमिति च व्युत्पादयितुमवश्यमत्र सन्धौ विघ्नहेतवो निबन्धनीयाः । व्यसनादिभिरिति आदिशब्दात् शापादिपरिग्रहः । तत्र व्यसनाद् विघ्नो यथा रामाभ्युदये पञ्चमेऽङ्के रामः—

" प्रत्याख्यानरुषः कृतं समुचितं क्रूरेण ते रक्षसा
सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः ।
व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये ! नोचितम् ॥ "

अत्र रावणेन यन्मायारूपसीताव्यापादनं तद्रूपेण व्यसनेन सीताप्राप्ति-विघ्नजो विमर्शः।

यथा वा रघुविलासे षष्ठेऽङ्के लक्ष्मणः—

"नाकीर्णा दशकन्धरी पलभुजां पत्युः शिवैः पत्त्रिभि—
र्दत्ता नापि बिभीषणाय सुहृदे लङ्काधिपत्यस्थितिः ।
वैदेही विरहाग्निमग्नमनसो नार्यस्य सन्दर्शिता
जातं जन्म वृथा हहा ! रणधुराधौरेयदोष्णो मम ॥ "

अत्र लक्ष्मणस्य शक्तिभेदव्यसनेन फलप्राप्तिविघ्नजन्मा विमर्शः।

शापाद् यथा अभिज्ञानशाकुन्तले पञ्चमेऽङ्के दुर्वासःशापविमोहितत्वेन त्यक्तायां शकुन्तलायामन्तर्हितायां च, षष्ठेऽङ्के अङ्गुलीयकदर्शनेन समुपजातस्मृतौ राजनि दुर्वासःशापविघ्नजो विमर्शः।

दैवतो यथा विधिविलसिते पञ्चमेऽङ्के—

" कञ्चुकी—हा ! धिक् कष्टम्, नैवोल्लङ्घ्यः प्राक्तनः कर्मविपाकः ।

वार्ताऽपि नैव यदिहास्ति स राजचन्द्रः
तेनोज्झिता विधिविमोहितचेतनेन ।
देवा वने त्रिदशनाथविलासिनीभिः
कर्तुं गता जगति सत्यमिति प्रवादः ॥ "

अत्र सदाचारविलम्बिनि नले दैवत्यक्तदमयन्ती—राज्यप्राप्तिविघ्नजो विमर्शः।

क्रोधाद् यथा वेणीसंहारे षष्ठेऽङ्के सिद्धकल्पेऽपि कार्ये क्रोधाविशया-दपर्युषितां प्रतिज्ञामास्थितवति भीमसेने दुर्योधने चान्तर्जलं निमग्ने यत्नान्वेषणैरप्यनुपलभ्यमाने युधिष्ठिरो निर्वेदाद् विमृशन्नाह—

मयि जीवति वत्सस्य छायामप्याक्रमितुम्' इति योद्धुं निष्क्रान्तेन दुर्योधनेन विजयान्वेषणरूपं औन्मुख्यम्। तथा—

" राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य मिषतः कर्णस्य शल्यस्य च।
पीतं तस्य मयाऽद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग् वक्षसः ॥"

इत्यादिना भीमसेनेन दुःशासनवधात् विजयलाभरूपमौन्मुख्यम्। एवमत्र पुनःपुनर्लाभालाभगवेषणैर्बीजस्यौन्मुख्यं दर्शितम्। अत एव फलप्राप्तिसम्भावनारूपो गर्भसन्धिरुच्यते। एवं शृङ्गारादिप्रधानेष्वपि रूपकेषु लाभालाभगवेषणानि दर्शनीयानि। इह गर्भसन्धावप्राप्त्यंशः प्रधानं(न)फलसम्भावनाऽऽत्मकत्वात्, अन्यथा फलनिश्चयात्मक एव स्यात्। अवमर्शसन्धौ तु प्राप्त्यंशः प्रधानं(न)फलनिश्चयरूपत्वादिति विशेषः। इति ॥

अथावमर्शमाह—

उद्भिन्नसाध्यविघ्नात्मा विमर्शो व्यसनादिभिः ॥ ३९ ॥

बीजस्योत्पत्त्युद्घाट-फलौन्मुख्यैरुद्भिन्नं भवनाभिमुखं यत् साध्यं प्रधानफलं तद्विघ्नात्मा(प्र)त्यूहहेतुसम्पातात्मा नियताप्तिचतुर्थ्यवस्थापरिच्छिन्नः प्रधानवृत्तांशः। विमृशति बलवदन्तरायहेतुसम्पात(त्प्र)त्यासन्नमपि साध्यं प्रति सन्देग्धि नेताऽस्मिन्निति विमर्शः। नियतफलाप्त्यवस्थया व्याप्तत्वेऽप्यस्य सन्धेः सम्भावनानन्तरं सन्देहस्याभासावपि च फलं प्रति जनक-विघातकयोस्तुल्यबलत्वात् सन्देहात्मकत्वम्' विघ्नैरपि हन्यमानाश्च महात्मानो विशेषतो यतन्ते' इति वचनतो नियतफलाप्तिरूपत्वम्। 'श्रेयांसि बहुविघ्नानि भवन्ति' इति विघ्नहेतुसम्पातेऽपि प्रत्यासन्नवार्त्तीनि फले न निवर्तनीयमिति च व्युत्पादयितुमवश्यमत्र सन्धौ विघ्नहेतवो निबन्धनीयाः। व्यसनादिभिरिति आदिशब्दात् शापादिपरिग्रहः। तत्र व्यसनाद् विघ्नो यथा रामाभ्युदये पञ्चमेऽङ्के रामः—

" प्रत्याख्यानरुषः कृतं समुचितं क्रूरेण ते रक्षसा
सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः ।
व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये ! नोचितम् ॥ "

अत्र रावणेन यन्मायारूपसीताव्यापादनं तद्रूपेण व्यसनेन सीताप्राप्ति-विघ्नजो विमर्शः ।

यथा वा रघुविलासे षष्ठेऽङ्के लक्ष्मणः—

"नाकीर्णा दशकन्धरी पलभुजां पत्युः शितैः पत्रिभि—
र्दत्ता नापि विभीषणाय सुहृदे लङ्काधिपत्यस्थितिः ।
वैदेही विरहाग्निमग्नमनसो नार्यस्य सन्दर्शिता
जातं जन्म वृथा हहा ! रणधुराधौरेयदोष्णो मम ॥ "

अत्र लक्ष्मणस्य शक्तिभेदव्यसनेन फलप्राप्तिविघ्नजन्मा विमर्शः ।

शापाद् यथा अभिज्ञानशकुन्तले पञ्चमेऽङ्के दुर्वासःशापविमोहितत्वेन त्यक्तायां शकुन्तलायामन्तर्हितायां च, षष्ठेऽङ्के अङ्गुलीयकदर्शनेन समुप-जातस्मृतौ राजनि दुर्वासःशापविघ्नजो विमर्शः ।

दैवतो यथा विधिविलसिते पञ्चमेऽङ्के—

" कञ्चुकी—हा ! धिक् कष्टम्, नैवोल्लङ्घ्यः प्राक्तनः कर्मविपाकः ।

वार्ताऽपि नैव यदिहास्ति स राजचन्द्रः
तेनोज्झिता विधिविमोहितचेतनेन ।
देवा वने त्रिदशनाथविलासिनीभिः
कर्तुं गता जगति सख्यमिति प्रवादः ॥ "

अत्र सदाचारविलम्बिनि नले दैवत्यक्तदमयन्ती—राज्यप्राप्तिविघ्नजो विमर्शः ।

क्रोधाद् यथा वेणीसंहारे षष्ठेऽङ्के सिद्धकल्पेऽपि कार्ये क्रोधातिशया-दपर्युषितां प्रतिज्ञामास्थितवति भीमसेने दुर्योधने चान्तर्जलं निमग्ने यत्नान्वे-षणैरप्यनुपलभ्यमाने युधिष्ठिरो निर्वेदाद् विमृशन्नाह—

" तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम् ।
भीमेन प्रियसाहसेन रभसात् स्वल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥ "

एष भीमक्रोधात् कार्यविनिपाते सति जात इति क्रोधजप्रतिज्ञाविघ्नात्मा विमर्शः । एवमनेकहेतुजो विमर्शसन्धिः ॥ ३९ ॥

अथ निर्वहणसन्धिं निरूपयति—

सबीजविकृतावस्था नानाभावा मुखादयः ।
फलसंयोगिनो यस्मिन्नसौ निर्वहणं ध्रुवम् ॥ ४० ॥

बीजस्य विकृतं विकार उत्पत्त्युद्घाट-फलोन्मुख्यादिकः सह बीजविकृतैरवस्थाभिश्च प्रारम्भादिभिर्वर्तन्ते । नाना विचित्रा भावाः स्थायि-व्यभिचारि-सात्त्विका अथवा भावयन्ति फलं साधयन्ति भावा उपाया बिन्दु-पताका-प्रकरी-कार्याणि यत्र । सुखप्राप्तौ च फले रति-हासोत्साह-विस्मय-स्थायिभावबाहुल्यं धृति-गर्वौत्सुक्य-मदादि-व्यभिचारिबाहुल्यं च मुखादीनाम् । दुःखहानौ तु फले क्रोध-शोक-भय-जुगुप्सा-स्थायिभावबाहुल्यमालस्यौग्र्यादि-व्यभिचारिबाहुल्यं च द्रष्टव्यम् । मुखादयो मुख-प्रतिमुख-गर्भ-विमर्शाः । फलेन सुखसाध्येन नायक-प्रतिनायक-नायिकाऽमात्यादिव्यापारैः सम्यगौचित्येन युज्यन्ते सम्बध्यन्ते यस्मिन् प्रधानवृत्तांशे स फलागमावस्थया परिच्छिन्नो निर्वहणसन्धिः । ध्रुवमिति प्रारम्भस्य निर्वाहाविनाभावित्वात् सर्वरूपकेष्वस्यावश्यम्भावमाह । यथा रत्नावल्यामैन्द्रजालिकप्रवेशात् प्रभृत्यासमाप्तेरिति ।

केचित् तु मुखादयः सन्धयोऽवस्थाश्च यत्र पृथक् पृथक् सङ्क्षेपतः पुनरुल्लिङ्ग्यन्ते तं निर्वहणसन्धिमाहुः । यथा सत्यहरिश्चन्द्रे षष्ठेऽङ्के देवः—

"आखेटो मुनिकन्यका कुलपतिः कीरः शृगालोऽध्वगा
विप्रो म्लेच्छपतिर्मनुष्यमरणं लम्बस्तनी मान्त्रिकः ।
उद्बद्धः पुरुषो वियच्चरवधूर्गोमायुनादः फणी
सर्वं सत्त्वपरीक्षणोत्सुकरसैरस्माभिरेतत् कृतम् ॥ "

आखेट इत्यादिना मुखसन्धिनिबद्धाः, कीर इत्यादिना प्रतिमुखसन्धिभाविनः, अध्वगेत्यादिना गर्भसन्धिग्रथिताः, मनुष्येत्यादिना च विमर्शसन्धिसूत्रिता यथासङ्ख्यं प्रारम्भाद्यवस्थानुगताः फलवन्तोऽर्था निर्वहणसन्धावेकवाक्यताऽऽपादनार्थं सङ्क्षेपत' पुनरुपात्ता इति ॥ ४० ॥

अथ दिव्याङ्गमित्यत्राङ्गशब्दोपात्तानि उपक्षेपादीनि अङ्गानि विपञ्चयितुं प्रथमं मुखसन्धिगतान्युद्दिशति—

उपक्षेप परिकर परिन्यास समाहिति ।
उद्भेद करणं चैतान्यत्रैवाथ विलोभनम् ॥ ४१ ॥
भेदन प्रापण युक्तिर्विधान परिभावना ।
सर्वसन्धिष्वमूनि स्युर्द्वादशाङ्ग मुख ध्रुवम् ॥ ४२ ॥

अत्रैवेति उपक्षेपादीनि करणान्तानि मुखसन्धावेव भवन्ति । तत्रापि उपक्षेप-परिकर-परिन्यासानां यथोद्देशक्रममादावेव, समाधानस्य तु रचनावशान्मध्यैकदेश एव, उद्भेद-करणयोस्तु उपान्त्ये निबन्धः । उपक्षेपादीनि करणरहितानि युक्तिसहितानि षट् अत्रावश्यं भवन्ति । विलोभनादीनि तु सर्वसन्धिष्वपि भवन्ति, संविधानकवशात् तदर्थस्यान्यत्रापि सम्भवात् । बाहुल्यनिबन्धापेक्षया त्वत्रोपादानम् । एवमन्यसन्धिष्वपि ज्ञेयम् । भेदस्तु सर्वसन्धिष्वङ्कान्ते प्रवेशक-विष्कम्भकान्ते च अवश्यं निबन्धनीयः, पात्रभेदरूपत्वात् तस्य । उपक्षेप-परिकर-परिन्यासेभ्योऽपराण्यङ्गानि वृत्तानुगुण्यादुद्देशक्रमातिक्रमेणापि निबध्यन्ते । आमुखस्य च नटवृत्तत्वेनेतिवृत्तानङ्गत्वात् तदनन्तरमङ्गानां निबन्धः । द्वादशाङ्गमिति सन्धिः । संविधानखण्डान्यङ्गानि सन्धिरूपस्याङ्गिनोऽवयवत्वेन निष्पादकत्वात् । अङ्गसङ्ख्यानियमश्च सन्धिषूपात्ताङ्गापेक्षया । सन्ध्यन्तरङ्गानुप्रवेशे तु न सङ्ख्यानियमः । सङ्ख्यासङ्क्षेपश्चाङ्गानां परस्परान्तर्भावेन प्रतिसन्धिसुकरोऽपि प्राचीनैरकृतत्वात् भणितिभङ्गिबाहुल्यस्य च चमत्कारकारित्वादस्माभिर्न कृतः । ध्रुवमिति मुखसन्धिः सर्वरूपकेष्ववश्य भवति । निर्वहणमप्येवम् । आरम्भ-निर्वाहयोरवश्यम्भावित्वात् । प्रतिमुखादयस्तु व्यायोगादिषु यथालक्षणं भवन्ति न भवन्ति च । अङ्गानि च वृत्तविस्तरकारित्वादवश्यं निबन्धनीयानि । अपरथा

रामस्य पत्नी रावणेन वनान्तादपहृता रामेण च जटायुषः समुपलभ्य सुग्रीवं सहायं वानराधिराज्यप्रतिपादनादधिगम्य समुद्रसेतुबन्धमाधाय निहत्य च रावणं प्रत्यानीतेत्यत्र प्रारम्भाद्यवस्थानिबन्धनीयैः पञ्चभिरपि सन्धिभिर्बीजाद्युपाययुक्तैर्निबद्धे रूपके वृत्तसङ्क्षेपः स्यात्. तथा च न चमत्कारः। किञ्च अरञ्जकमपि वृत्तमङ्गवैचित्र्येण निबध्यमानं परां रक्तिमावहति, कार्यवशाच्च पुनरुच्यमानमपि वृत्तमङ्गभङ्ग्या निबद्धमपुनरुक्तमिवाभाति। अयःशलाकाकल्पता चाङ्गसम्बद्धस्य वृत्तस्य न भवति। प्रत्येकशश्चाङ्गानां प्रयोजनं यथाऽवसरं लक्षणे दर्शयिष्यामः ॥ ४१–४२ ॥

अथ सकलकाव्यार्थः[र्थ]प्रधानरसलक्षणं प्रयोजनं च सङ्क्षेपेणोपक्षिप्यत इति प्रथममुपक्षेपं लक्षयति—

बीजस्योप्तिरुपक्षेपः

विस्तारिणः काव्यार्थस्य मूलभूतो भागो बीजमिव बीजं तस्योप्तिरावापमात्रमुपक्षेपः। यथा रत्नावल्यां नेपथ्ये—

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः॥"

इत्यादिना यौगन्धरायणेन वत्सराजस्य रत्नावलीप्राप्तिहेतुः स्वव्यापारानुकूलदैवो बीजमुप्तम्॥

अथ परिकरः—

स्वल्पव्यास परिक्रिया।

उपक्षिप्तार्थस्य सुष्ठु विशेषवचनैरल्पं विस्तारणं परिकरः। यथा वेणीसंहारे भीमसेनः सहदेवमाह—

"प्रवृद्धं यद् वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्यो हेतुर्भवति न किरीटी न च युवाम्।
जरासन्धस्योरःस्थलमिव निरूढं पुनरपि
क्रुधा भीमः सन्धिं विघटयति यूयं घटयत॥" इति॥

अथ परिन्यासः—

विनिश्चयः परिन्यासः

उपाक्षिप्य विस्तारितस्यार्थस्य विशेषेण निश्चयः सिद्धतया हृदयेऽवस्थापनं परितो न्यसनं परिन्यासः । यथा राघवाभ्युदये—

मतिसागरः—देव ! मा शङ्किष्ठाः, प्रलयेऽपि किं विपरियन्ति मुनिभाषितानि ?

जनकः—तत् किं भुजखण्डविक्रमाक्रान्तभारतखण्डत्रयस्य तस्यापि पराजयः सम्भाव्यते ? ।

मतिसागरः—(स्वगतम्) अहो ! दुरात्मनो राक्षसस्याश्चैश्वर्यं यदयं रहोऽपि देवस्तदभिधानमुच्चारयन् बिभेति । (प्रकाशम्) देव ! सम्भाव्यत इति किमुच्यते सिद्ध एव किं नाभिधीयते देवेन ?" इति ।

यथा[वा] वेणीसंहारे—

" चञ्चद्भुजभ्रमितचण्डगदाऽभिघात-
सञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवि ! भीमः ॥ " इति ।

यथा वाऽस्मदुपज्ञे रोहिणीमृगाङ्काभिधाने प्रकरणे प्रथमेऽङ्के मृगाङ्कं प्रति वसन्तः—" कुमार ! मा शङ्किष्ठाः ।

उन्मत्तप्रेमसंरम्भादारभन्ते यदङ्गनाः ।
तत्र प्रत्यूहमाधातुं ब्रह्माऽपि खलु कातरः ॥ "

अनुपक्षिप्तश्चार्थो न विस्तार्यते, अविस्तारितश्च न निश्चीयत इति त्रयाणामप्येषामुद्देशक्रमेणैव निबन्धः ॥

अथ समाहितिः—

पुनर्न्यासः समाहितिः ॥ ४२ ॥

सङ्क्षिप्योपक्षिप्तस्य बीजस्य स्पष्टताप्रतिपादनार्थं पुनर्न्यासो भणिति-

वैचित्र्यं सम्यगासमन्ताद् धानं पोषणं समाहितिः। यथा वेणीसंहारे—
"(नेपथ्ये) भो भो द्रुपद–विराट–वृष्ण्यन्धक–सहदेव–प्रभृतयोऽस्मदक्षौहिणीपतयः! कौरवचमूप्रधानाश्च योधाः! श्रूयताम्।

यत् सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद् विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता।
तद् द्यूतारणिसम्भृतं नृपशुना केशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत् कुरुवने यौधिष्ठिरं जृम्भते॥" इति।

'स्वस्था भवन्ति' इति यद् बीजं तदिदानीं प्रधाननायकगतत्वेन सम्यक् पोषं नीतमिति॥ ४३॥

अथोद्भेदः—

स्वल्पप्ररोह उद्भेदः

आमुखानन्तरमुप्तस्य बीजस्य स्वल्पप्ररोहः। किञ्चित्फलानुष्ठानानुकूल्यप्रदर्शनं धान्यस्योच्छूनतेवोद्भेदः। बीजस्योद्घाटनमङ्कुरकल्पम्, उद्भेदः पुनरङ्कुरकल्पादुद्घाटनाद् भूमिन्यस्तधान्योच्छूनतेव प्राचीनावस्था इत्ययं मुखसन्धेरेवाङ्गम्, न पुनरुद्घाटरूपत्वात् प्रतिमुखसन्धेः। यथा वेणीसंहारे—

"णाध पुणो वि तए आगच्छिय अहं समासासइदव्वा।"[1]

इति द्रौपद्याऽभिहितो भीमः प्रत्याह—
"अयि! किमद्याप्यलीकाश्वासनाभिः?

भूयः परिभवक्षान्तिलज्जाबन्धुरिताननम्।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम्॥"

इति कुरुनिधनारम्भरूपस्य बीजार्थस्यायमुद्भेद इति।

अन्ये तु गूढभेदनमुद्भेदमामनन्ति। यथा रत्नावल्यां वत्सराजस्य

---

१ नाथ! पुनरपि त्वयाऽऽगत्याहं समाश्वासयितव्या।

कुसुमायुधव्यपदेशनिगूढस्य ' अस्तापास्त-' इत्यादिना वैतालिकवचसा सागरिकां प्रत्युद्भेदः।

यथा वा राघवाभ्युदये—

" सीता—( समन्तादवलोक्य रामं च सविशेषं निर्वर्ण्य स्वगतम् ) कथमयमनङ्गोऽप्यङ्गमास्थाय चापारोपणं द्रष्टुमायातः! प्रसीद भगवन्ननङ्ग! प्रसीद तथा कुर्या यथा राम एव चापारोपणाय प्रभवति।

लवङ्गिका—( अङ्गुल्या रामं दर्शयन्ती ) जं भट्टिदारिया इत्तियं कालं मणोरहगोयरं कयवदी तं संपयं दिट्ठिगोयरं करेदु।[1]

सीता—( ससम्भ्रमं स्वगतम् ) कथमहं राममेव अनङ्गमज्ञासिषम्?"

इत्यनङ्गभ्रान्त्या निगूढस्य रामस्य लवङ्गिकावचसा उद्भेदः॥

अथ करणम्—

करणं प्रस्तुतक्रिया।

अवसरानुगुणस्यार्थस्य प्रारम्भः करणम्। यथा वेणीसंहारे—

" सहदेवः—आर्य! गच्छामो वयं गुरुजनानुज्ञाता विक्रमानुरूपमाचरितुम्।

भीमः—एते च वयमुद्यता एवार्यस्याज्ञामनुष्ठातुम्।"

इत्यनेनानन्तराङ्कप्रस्तूयमानसङ्ग्रामारम्भणात् करणम्।

यथा वा यादवाभ्युदये द्वितीयाङ्कोपान्त्ये—

कंसः—( सप्रसादम् ) साध्वमात्य! साधु अयमेव सङ्ग्रहोपायो नान्यः। तद् तर्हि व्रज त्वं सामग्रीकरणाय।"

इत्यनेना[न]न्तराङ्कप्रस्तूयमानमल्लरङ्गभूमिप्रारम्भात् करणमिति।

अन्ये तु विपदां शमनं करणमाहुः, शमनं चाशीर्वादवशेनान्यथा वा। यथा वेणीसंहारे भीमं प्रति द्रौपदी—

---

1. य भर्तृदारिका इयन्त काल मनोरथगोचर कृतवती, त साम्प्रत दृष्टिगोचर करोतु।

"[1]जं असुरसमराभिमुहस्स हरिणो मङ्गलं वे तुम्हाणं भोदु।" इति।

अथ विलोभनम्—

विलोभनं स्तुतेर्गार्ध्यम्

स्तुतेर्गुणवदेतदिति श्लाघातः प्रस्तुते कृत्ये गार्ध्यमभिलाषस्थिरीकरणं विलोभनम्। यथा वेणीसंहारे 'चञ्चद्भुज–'इत्यादिश्लोकानन्तरं द्रौपदी—

[2]णाध! किं दुक्करं तए परिकुविएण? ता अणुगिण्हंतु एदं ववसिदं देवदाउ।"

इत्यनेन सुयोधनवधस्य गुणवत्त्वख्यापनाद् भीमस्य गार्ध्यापदं विलोभनम्। इदं च परिन्यासानन्तरमेव निबध्यते। सन्ध्यन्तरसाधारण्याय चोक्तक्रमेणोद्देशः।

अथ भेदनम्—

भेदनं पात्रनिर्गमः॥ ४४॥

रङ्गप्रविष्टानां पात्राणां निर्गमो रङ्गान्निःसरणं येन तद् भेदनम्। पात्राणां यथास्वं प्रयोजनवशादितश्च इतश्च गन्तुमन्यार्थोऽप्यभिप्राय उद्यमो वा रङ्गान्निर्गममापादयन् भेदनमुच्यते। यथा वेणीसंहारे भीमो द्रौपद्या सङ्ग्रामापायशङ्किन्या शरीरानपेक्षे पराक्रमे निषिद्धः प्रत्याह–" अयि सुक्षत्रिये!

अन्योन्यास्फालभिन्नद्विपरुधिर–वसासान्द्रमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे
सङ्ग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः॥" इति।

एतेन हि सङ्ग्रामविचरणे पाण्डवानां पाण्डित्यख्यापनेन सङ्ग्रामावतरणाभिप्रायः सहदेवस्य चात्मनश्च सङ्घातभेदनार्थ एवोपदर्शित इति भेदोऽङ्गम्।

अन्ये तु भेदं प्रोत्साहनमाहुः। यथा वेणीसंहारे—

१ यदसुरसमराभिमुखस्य हरेर्मङ्गलं तद् युष्माकं भवतु।

२ नाथ! किं दुष्करं त्वया परिकुपितेन? तदनुगृह्णन्तु एतद् व्यवसितं देवताः।

" [द्रौपदी-] नाध ! मा खु जण्णसेणीपरिभवुद्दीविदकोवा अणवेक्खिदसरीरा परिक्कमिस्सध यदो अपमत्तसंचरणीयाइं रिउबलाइं सुणीयंति।

भीमः—अयि सुक्षत्रिये ! अन्योन्यास्फालभिन्न-"

इत्यादिना विषण्णाया द्रौपद्याः क्रोधोत्साहबीजानुगुण्येनैव प्रोत्साहनात् भेद इति।

अन्ये तु संहतानां प्रतिपक्षाणां बीजफलोत्पत्तिनिरोधकानां विश्लेपकं भेदरूपमुपायं भेदनं मन्यते इति ॥ ४४ ॥

अथ प्रापणम्—

प्रापणं सुखसम्प्राप्तिः

सुखस्य सुखहेतोश्च सम्यगन्वेषणादाप्तिः प्रापणम्। यथा वेणीसंहारे-

" ( प्रविश्य ) कञ्चुकी—कुमार ! एष [खलु] भगवान् [वासुदे]वः पाण्डवपक्षपातामर्षितेन कुरुराजेन संयमयितुमारब्धः । ततः स महात्मा दर्शितविश्वरूपतेजःसम्पातमूर्छितमवधूय कुरुबलमस्मत्सेनासन्निवेशमनुप्राप्तः। यतो देवः कुमारमविलम्बितं द्रष्टुमिच्छति।"

अयं ह्यर्थो भीमसेनस्य कुरुभिः सह सन्धिभेदमापादयंश्चान्तः सुखयतीति। तथा भणितिवैचित्र्यार्थमङ्गानि कवय एकस्मिन्नपि सन्धावावर्तयन्ति। यथा वेणीसंहारे इदमेवाङ्गं पुनर्निबद्धम्। तथाहि—

" चेटी—( द्रौपदीमुद्दिश्य सानन्दम् ) भट्टिणि ! परिकुविदो विअ कुमारो लक्खीयदि।

द्रौपदी—ऐवं ता अवधीरणा वि मं एसा समासासेदि। ता इध य्येव उववसिअ सुणामो दाव नाधस्स ववसिदं।

---

१ नाथ ! मा खलु याज्ञसेनीपरिभवोद्दीप्तकोपा अनपेक्षितशरीराः परिक्रमिष्यथ, यतोऽप्रमत्तसंचरणीयानि रिपुबलानि श्रूयन्ते।

२ भर्त्रि ! परिकुपित इव कुमारो लक्ष्यते।

३ एवं तावदवधीरणाऽपि मामेषा समाश्वासयति । तदत्रैवोपविश्य शृणुमस्तावद् नाथस्य व्यवसितम्।

९

भीमः—

मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
सञ्चूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥

द्रौपदी—( सहर्षम् ) अस्सुदपुरवं ईदिसं वयणं ता पुणो वि भण ।[1] ”
इति द्रौपद्या अभिप्रेतार्थप्राप्तिरिति ॥

अथ युक्तिः—

युक्तिः कृत्यविचारणा ।

विचारणा गुण-दोषविवेकतः कार्यपर्यालोचनम् । यथोदात्तराघवे—
“ लक्ष्मणः—

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
मात्रा स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा ?
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥ ”

इयं च युक्तिः स्थानान्तरभाविन्यपि तापसवत्सराजे उपक्षेप-परिकरानन्तरं निबद्धा दृष्टेति । राघवाभ्युदये तथैवास्माभिर्ग्रथिता । तत्र हि—

“ मतिसागरः—यत् पुरा भट्टारकेण सागरबुद्धिना विभीषणाय कथितं यथा-सीतानिमित्तको दाशरथितो रावणवध इति । तस्यार्थस्य तदेतच्चापारोपणं बीजमुपस्थितं [ कथितं ] च मे करङ्कनाम्ना लङ्काचारिणा चरेण यथा-भामण्डलस्येव रावणस्यापि सीतायां प्रेमास्त्येव, किन्तु दोर्दर्पोऽचापारोपणे नायातः । (विमृश्य) तन्नूनमसौ पश्चादपि सीतामपहरिष्यति । ” इति ॥

---

१ अश्रुतपूर्वमीदृशं वचनम् , तत् पुनरपि भण ।

अथ विधानम्—

विधानं सुख-दुःखाप्तिः

द्वयोः सुख-दुःखयोरेकत्रानेकत्र वा पात्रे प्राप्तिरेकस्यैव वा सुखस्य दुःखस्य वा प्राप्तिर्विधानम्। एकत्र पात्रे सुख-दुःखयोः प्राप्तिर्यथा मालतीमाधवे—" माधवः—

यद् विस्मयस्तिमितमस्तमितान्यभाव-
मानन्दमन्दममृतप्लवनादिवाभूत्।
तत्सन्निधौ तदधुना हृदयं मदीय—
मङ्गारचुम्बितमिव व्यथमानमास्ते ॥ "

इत्यनेन सानुरागमालत्यवलोकनान्माधवस्य सुख-दुःखाप्तिः।

अनेकत्र यथा तापसवत्सराजे-काञ्चनमालया ज्ञातिगृहवार्ताविशेषापदेशात् वासवदत्ताया वियोगदुःखेऽपह्नुते राजा स्मित्वाऽऽह—

" दृष्टिं प्रेमभरालसां मयि मुहुर्विन्यस्य लज्जावती
कालस्याहमिहासहेत्यनिरतं प्रत्यर्पयन्ती मनः।
जाता देवि ! तदा ममापनयने हेतुस्त्वमेवाधुना
किं सन्देशनवीभवत्कुलगृहोत्कण्ठाधिकं ताम्यसि ? ॥"

अत्र च वासवदत्तायाः प्रवासाभ्युपगमाद् दुःखम्, वत्सराजस्य चाविदितविप्रवासवृत्तान्तस्य सुखम्।

एकस्य सुखस्य प्राप्तिर्यथा रत्नावल्याम्—
" कंचणमाले [1] पइट्ठाविहि असोयमूले भयवंतं पज्जुन्नं।" (इत्युपक्रमे)

राजा—" कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम्।
आभासि मकरकेतोः पार्श्वस्था चापयष्टिरिव ॥ "

इत्यारभ्य " वासवदत्ता राजानं पूजयति " इति यावत्।

---

१ काञ्चनमाले ! प्रतिष्ठापयाशोकमूले भगवन्तं प्रद्युम्नम्।

एकस्य दुःखस्य यथा अस्मदुपज्ञे निर्भयभीमनाम्नि व्यायोगे—
भीमः—

" अन्यायैकजुषः शठव्रतपुषो येऽस्माकमत्र द्विष-
स्ते नन्दन्ति मदं वहन्ति महतीं गच्छन्ति च श्लाघ्यताम् ।
ये तु न्यायपराः पराजेत्रधरास्ते पश्यतामी वयं
नीचैःकर्मकृतः पराभवभृतस्त्वत्राश्च वर्तामहे ॥ "

सुखस्य सुखहेतोश्च अन्वेषणरूपा प्राप्तिः । सन्निहितसुखात्मकं च एकपात्रगतसुखा[ त्मकं च वि ]धानमिति भेदः ॥

अथ परिभावना—

विस्मयः परिभावना ॥ ४९ ॥

जिज्ञासातिशयेन किमेतदिति कौतुकानुबन्धो विस्मयः परि[भावना] यथा नागानन्दे—" ( मलयवतीं दृष्ट्वा ) नायकः—

" स्वर्गस्त्री यदि तत् कृतार्थमभवच्चक्षुःसहस्रं हरे-
र्नागी चेन्न रसातलं शशभृता शून्यं मुखेऽस्याः सति ।
जातिर्नः सकलाऽन्यजातिजयिनी विद्याधरी चेदियं
स्यात् सिद्धान्वयजा यदि त्रिभुवने सिद्धाः प्रसिद्धास्ततः ॥ "

यथा वा रोहिणीमृगाङ्काभिधाने प्रकरणे प्रथमेऽङ्के—
" मृगाङ्कः—( सोत्कण्ठम् )

सा स्वर्गलोकललनाजनवर्णिका वा
दिव्या पयोधिदुहितुः प्रतियातना वा ।
शिल्पश्रियामथ विधेः पदमन्तिमं वा
विश्वत्रयीनयनसङ्घटनाफलं वा ॥ " इति ।

एतानि मुखसन्धेर्द्वादशाङ्गानीति ॥ ५४ ॥

ततः(अथ) प्रतिमुखसन्ध्यङ्गानु(न्यु)द्दिशति—

विलासो धूननं रोधः सान्त्वनं वर्णसंहृतिः ।
नर्म नर्मद्युतिस्तापः स्युरेतानि यथारुचि ॥ ४६ ॥
पुष्पं प्रगमनं वज्रमुपन्यासोपसर्पणम् ।
पञ्चावश्यमवा(प्य)ङ्गानि प्रतिमुखे त्रयोदश ॥ ४७ ॥

यथारुचीति वृत्तवैचित्र्यानुरोधेनात्र भवन्ति न भवन्ति च । पुष्पादीनि पुनः पञ्चावश्यं प्रतिमुखसन्धौ भवन्त्येव । त्रयोदशाप्येतानि प्रतिमुख एव सुतरां निर्बन्धमर्हन्ति । उद्देशक्रमश्च निबन्धेषु नापेक्षणीय इति ॥ ४६–४७ ॥

अथ विलासः—

विलासो नृ–स्त्रियोरीहा

नृ–स्त्रियोः परस्परमीहा रत्यभिलाषः । यथा अभिज्ञानशाकुन्तले मुखसन्धावुपलब्धायां नायिकायां प्रतिमुखे तद्विषयो राज्ञो विलासः । तत्र हि राजा आह—

" कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥

(स्मितं कृत्वा) एवमात्माभिप्रायसम्भावितेष्टजनचित्तवृत्तिः प्रार्थयिता विप्रलभ्यते कुतः ?

स्निग्धं वीक्षितमन्यतोऽपि नयने यत् प्रेषयन्त्याऽनया
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।
मा गा इत्युपरुद्धया यदपि तत् सासूयमुक्ता सखी
सर्वं तत् किल मत्परायणमहो ! कामः(मी) स्वतां पश्यति ॥ "

इत्यादिना राज्ञो रतिसमीहा ।

यथा वा नलविलासे तृतीयाङ्के—

" दमयन्ती—(राजानमवलोक्य स्वगतम्) कहमेस सयं मयवं पंचबाणो ! अहवा वरायस्स अणंगस्स कुदो ईदिसो अंगसोहग्गप्पब्भारो ? ता कदत्थो दमयन्तीयाए अंगचंगिमा ।" इति ।

१ कथमेव स्वयं भगवान् पञ्चबाणः ! अथवा वराकस्यानङ्गस्य कुत ईदृशोऽङ्गसौभाग्यप्राग्भारः ? तत् कृतार्था दमयन्त्या अङ्गचङ्गिमा ।

यथा वाऽस्मदुपज्ञे कौमुदीमित्राणन्दनाम्नि प्रकरणे तृतीयेऽङ्के—
" मित्राणन्दः--प्रिये !

वि(व)क्त्रं शीतरुचिर्वचांसि च सुधा दृष्टिश्च कादम्बरी
बिम्बोष्ठः पुनरेव कौस्तुभमणिर्मूर्तिश्च लक्ष्मीस्तव ।
श्रद्धालुर्युगपद् विलोकितुमयं स्वापत्यजातं चिरा-
देकस्थं विरचय्य कुन्दरदने ! त्वामर्णवः सूतवान् ॥ "

प्रतिमुखस्य चादावेवेदमङ्गं निबन्धनीयम् । य एव मुखे रस उपक्षिप्यते तस्यैव स्थायी विभावानुभाव-व्यभिचारिभिः पोषणीयः । कामफले च रूपके मुखसन्धावुपक्रान्तः शृङ्गारः प्रतिमुखे विलासेन स एव विस्तार्यते । विलासप्रकाशकान्येव चेतराण्यङ्गानि निबन्धनीयानि । वीरादिरसप्रधाने-ष्वर्थफलेषु रूपेषु पुनरुत्साहादिसम्पद्विपया (यो) नृस्त्रियोरीहाव्यापारो विलासः। यस्तु वेणीसंहारे भानुमत्या सह दुर्योधनस्य दर्शितो रत्यभिलापरूपो विलासः स नायकस्य तादृशेऽवसरेऽनुचितः। यदाह—

" सन्धि-सन्ध्यङ्गघटनं रसबन्धव्यपेक्षया ।
न तु केवलशास्त्रार्थस्थितिसम्पादनेच्छया ॥ " इति ॥

अथ धूननम्—

धूननं साम्न्यनादरः ।

साम्न्यनुनये अनादरो मनागनादृतिः ' नञोऽल्पार्थत्वात् ' । यथा पार्थविजये चित्रसेनेन संयते दुर्योधने सति युधिष्ठिरः—

" वत्स भीमसेन !

अयं स कालः शूराणां रिपूनां यत्र बन्धुषु ।
आपद्गतपरित्राणमपूर्वोऽनुनयक्रमः ॥ "

भीमसेनोऽपि दुर्योधनं प्रति युधिष्ठिरस्यानुनयमगृह्णन्नाह—
" कोऽयमनेकविधापकारकारिणः कौरवानुदिश्यार्यस्यार्द्रभावः ? " इति ।

कोचिद् धूननमरतिमाहुः, तच्च रोधेनैव सङ्गृहीतमिति ॥

अथ रोधः—

रोधोऽर्त्तिः

आर्त्तिः खेदो व्यसनमिष्टरोधाद् रोधः । यथा देवीचन्द्रगुप्ते—

"राजा—( चन्द्रगुप्तमाह )
त्वद्दुःखस्यापनेतुं सा शतांशेनापि न क्षमा ।"

ध्रुवदेवी—(सूत्रधारीमाह)

हंले[1] ! इयं सा ईदिसी अज्जउत्तस्स करुणापराहीणदा ।

सूत्रधारी–देवि[2] ! पडंति चंदमंडलाउ वि चुडुलीउ किं एतु(त्थ) करिम्ह ?

राजा—त्वय्युपारोपितप्रेम्णा त्वदर्थे यशसा सह ।
परित्यक्ता मया देवी जनोऽयं जन एव मे ॥

ध्रुवदेवी—अहं[3] पि जीविदं परिचयंती पढमयरं य्येव तुमं परिचइस्सं ।"

अत्र स्त्रीवेशनिह्नुते चन्द्रगुप्ते प्रियवचनैः स्त्रीप्रत्ययात् ध्रुवदेव्या गुरुमन्युसन्तापरूपस्य व्यसनस्य सम्प्राप्तिः ।

यथा वा सत्यहरिश्चन्द्रे—

राजा—देवि ! अवलम्बस्व मद्वचनम् । अत्रैव तिष्ठ । अशिक्षितपादचारा न शक्ष्यति भवती क्रमितुं दर्भाङ्कुरविधुरासु वनविधु(वसुन्ध)रासु ।

सुतारा—जं[4] भोदि तं भोदु । अहं गमिस्सं ।

---

१ हञ्जे ! इयं सा ईदृशी आर्यपुत्रस्य करुणापराधीनता ।

२ देवि ! पतन्ति चन्द्रमण्डलादप्युल्काः, किमत्र कुर्मः ?

३ अहमपि जीवितं परित्यजन्ती प्रथमतरमेव त्वां परित्यक्ष्यामि ।

४ यद् भवति तद् भवतु । अहं गमिष्यामि ।

राजा—(कुलपतिं प्रति) भगवन् !

त्यजन् हेम्नो लक्षां(क्षं) चतुरुदधिकाञ्चीं च वसुधां
सुधाम्भोभिः स्नानादपि समधिकां प्र(प्री)तिमभजम् ।
सवत्सामेतां तु प्रवसनपरां वीक्ष्य दयिता-
मिदानीं मन्येऽहं ज्वलदनललीढं वपुरदः ॥" इति ॥

अथ सान्त्वनम्—

सान्त्वनं साम

क्रुद्धस्यानुकूलनम् । यथा रामाभ्युदये द्वितीयेऽङ्के—

" मारीचः—नायमनुवृत्तिवचसामवसरः । परिस्फुटं विज्ञप्यते ।

दाराणां व्रतिनां च रक्षणविधौ वीरोऽनुषु (यो)ज्यानुजं
वीराणां खर-दूषण-त्रिशिरसामेको वधं यो व्यधात् ।
तस्याखण्डिततेजसः कुलजने न्यत्कारमाधिक्ष(विष्क)तः
कुण्ठः सङ्गरदुर्मदस्य भवतः स्याच्चन्द्रहासोऽप्यसिः ॥

रावणः—आः प्रतिपक्षपक्षपातिन् ! क्षुद्र ! राक्षसापसद ! किं बहुना ?

तवैव रुधिराम्बुभिः क्षतकठोरकण्ठस्रुतै
रिपुस्तुतिभवो मम प्रशममेतु कोपानलः ।
सुरद्विपशिरःस्थलीदलनदष्टमुक्ताफलः
स्वसुः परिभवोचितं पुनरसौ विधास्यत्यसिः ॥ "

( इति खड्गमाकर्षति )

प्रहस्तः—(पादयोर्निपत्य) प्रसीदतु प्रसीदतु महाराजः । नेदमनुरूपं स्वामिनः । देव !

लोकत्रयक्षयोद्भूतप्रकोपाग्रेसरस्य ते ।
ईदृग्चन्द्रहासस्य मृत्येष्वनुचितः क्रमः ॥

(पुनः क्रमादाह) देव! प्रसीद। प्रणयादतिक्रमोऽस्य न वामतया।"

इति मारीचं प्रति क्रुद्धस्य रावणस्य प्रहस्तविहितोऽयमनुनयः सान्त्वनम्। वज्रमप्यत्र प्रसङ्गात् प्रयुक्तम् 'कुण्ठः सङ्गरदुर्मदस्य भवतः स्याचन्द्रहासोऽप्यसिः' इत्यस्य प्रत्यक्षनिष्ठुरत्वात्॥

अथ वर्णसंहृतिः—

पात्रौघो वर्णसंहृतिः॥ ४८॥

पृथक् स्थितानां पात्राणामोघः कार्यार्थं मीलनं वर्ण्यन्त इति वर्णा- [ः तेषां वर्णा]नां नायक-प्रतिनायक-नायिका-सहायादिपात्राणां संहृति-रेकत्र करणम्। यथा रत्नावल्याम्—

"राजा—सुसङ्गते! क्वासौ क्वासौ (इत्यत आरभ्य)

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवम्॥" इति यावत्।

अत्र राज-सागरिका-विदूषक-सुसङ्गतानामेकत्र मीलनम्।

अन्ये तु वर्णानां ब्राह्मणादीनां यथासम्भवं द्वयोस्त्रयाणां चतुर्णां चैकत्र मीलनं वर्णसंहारमाचक्षते। यथा वीरचरिते तृतीयेऽङ्के—

"परिपदियमृषीणामेष वृद्धो युधाजित्
सह नृपतिभिरन्यैर्लोमपादश्च वृद्धः।
अयमविरतयज्ञो ब्रह्मवादी पुराणः
प्रभुरपि जनकानामद्रुहो याचकस्ते॥" इति।

एके तु वर्णितार्थतिरस्कारं वर्णसंहारमामनन्ति। उदाहरन्ति च यथा वेणीसंहारे कञ्चुकिना रथकेतनपतने निवेदिते भानुमती—

"अंतरीयदु ताव एदं समत्थबंभणाणं वेयज्झुणिमंगलुग्घोसेण।"[1]
इति॥ ४८॥

---

१ अन्तरीयतां तावदेतत् समस्त(थं)ब्राह्मणानां वेदध्वनिमङ्गलोद्घोषेण।

अथ नर्म—

क्रीडार्थ हसनं नर्म

यथा रत्नावल्याम्—

"विदूषकः—( कर्णं दत्त्वा ससम्भ्रमं राजानं हस्ते गृहीत्वा ) भो वयस्स ! पलायम्ह । एदस्सिं लकुचपायवे किं पि महाभूदं परिवसदि । यदि मे न पत्तियसि, ता अग्गदो भविय सयं य्येव आयन्नेहि ।

राजा—( आकर्ण्य ) वयस्य ! सारिकेयम् । " इति ।

तथा—

[विदूषकः—] "भो ! मा पंडिच्चगव्वमुव्वहह । इदं देअह वक्खाण-इस्सं जा एसा आलिहिदा सा कण्णगा दंसणीया य ।

राजा—वयस्य ! यद्येवम् अवहितैः श्रोतव्यमस्त्यवकासो(शो) नः कुतूहलस्य । "

तथा—

"सुसङ्गता—सहि ! जस्स कए तुवं आगदा, सो अयं पुरदो चिट्ठदि ।

सागरिका—( साङ्यम् ) सुसंगदे ! कस्स कए अहं आगदा ?

सुसङ्गता—अयि अप्पसंकिदे ! णं चित्तफलहयस्स, ता गिण्ह एदं । " इति ।

एता विदूषक-सुसङ्गतयो राज-सागरिकाक्रीडार्थं हासोक्तयः । अने-ल(नेक)शोऽप्येकमेवाङ्गं निबध्यत इति त्रिधोदाहृतम् ।

---

१ भो वयस्य ! पलायामहे । एतस्मिन् लकुचपादपे किमपि महाभूतं परिवसति । यदि मां न प्रत्येषि, तदाऽग्रतो भूत्वा स्वयमेवाकर्णय ।

२ भो ! मा पाण्डित्यगर्वमुद्वह । इदं दत्ताय व्याख्यास्यामि या एषाऽऽलिखिता सा कन्यका दर्शनीया च ।

३ सखि ! यस्य कृते त्वमागता, सोऽयं पुरस्तिष्ठति ।

४ सुसङ्गते ! कस्य कृतेऽहमागता ?

५ अयि ! आत्मशङ्किते ! ननु चित्रफलकस्य, तद् गृहाणेनम् ।

यथा वा नलविलासे—

" विदूषकः—(लम्बस्तनीं विलोक्य सभयकम्पम्) भो रायं ! अहं एदाउ ट्ठाणा उट्ठिस्सं ।

राजा—किमिति ?

विदूषकः—जइ एसा थूलमहिसी कडिअडं नचावेंती ममोवरि पडेदि ता ध्रुवं मं मारेदि । "

तथा—

" राजा—लम्बस्तनि ! इदमासनमास्यताम् ।

विदूषकः—भोदी ! लंबत्थणीए दुब्बलं खु एदं आसणं । ता तुमए सावहाणाए उवविसिदव्वं । "

तथा—

" विदूषकः—भोदी ! किं अइदुब्बला सि ?

लम्बस्तनी—मग्गपरिस्समेण ।

विदूषकः—भो कलहंसा ! किंचिएहिं गोणेहिं मुदेहिं एसा इध संपत्ता ?

(कलहंसो विहस्याधोमुखस्तिष्ठति) इति ॥

अथ नर्मद्युतिः—

दोषावृतौ तु तद्द्युतिः ।

दोषावृत्यै दोषाच्छादनाय यत् पुनर्हसनं हास्यहेतुर्वाक्यं सा तस्य नर्मणो द्योतनं नर्मद्युतिः । यथा रत्नावल्याम्—

" विदूषकः—भो ! अज्ज वि एसा चउव्वेउ(ई)विय बंमणो रियाउ पढिउं पयत्ता ।

---

१ भो राजन् ! अहमेतस्मात् स्थानादुत्थास्यामि ।
२ यद्येषा स्थूलमहिषी कटितटं नर्तयन्ती ममोपरि पतेत्, तदा ध्रुवं मां मारयेत् ।
३ भवति ! लम्बस्तन्यै दुर्बलं खल्वेतदासनम्, तत् त्वया सावधानयोपवेष्टव्यम् ।
४ भवति ! किमतिदुर्बलाऽसि ? । ५ मार्गपरिश्रमेण । ६ भो: कलहंस ! किमेभिर्गोणैर्मृतैरेषाऽत्र सम्प्राप्ता ? । ७ भोः ! अद्याप्येषा चतुर्वेदीव ब्राह्मण ऋचः पठितुं प्रवृत्ता ।

राजा—वयस्य ! किमप्यन्यचेतसा मया नावधारितम्, तद् किमनयोक्तम् ?

विदूषकः—भो एदं एदाए पढिदं—

दुल्लहजणाणुराओ लज्जा गरुई परव्वसो अप्पा ।
पियसहि ! विसमं पिम्मं मरणं सरणं नवरमेक्कं ॥

राजा—भो महाब्राह्मण ! कोऽन्य एवं ऋचामभिज्ञः ? " इति ।

अथ(त्र) मौर्ख्यदोषं छादयितुं यद् विदूषकेणोच्यते तद् राज्ञो हास्यहेतुत्वान्नर्मद्युतिः ।

अन्ये तु नर्मजां धृतिं नर्मद्युतिमाहुः । यथा रत्नावल्याम्—

" सुसङ्गता—सहि ! अदि(द)क्खिणा दाणि सि तुवं जा एवं भट्टिणो हत्थावलंबिया वि कोवं न मुंचसि ।

सागरिका—( सभ्रूभङ्गमीषद् विहस्य ) सुसंगदे ! इयाणिं पि न विरमसि ! " इति ।

एते च नर्म-नर्मद्युती अङ्गे कामप्रधानेष्वेव रूपकेषु निबन्धमर्हतः । कैशिकीप्राधान्येन तेषां हास्योचितत्वादिति ॥

अथ तापः—

अपायदर्शनं तापः

यथा पार्थविजये—

" कञ्चुकी—भो भो लोकपालाः ! परित्रायध्वम् ।

एषा वधूः भरतराजकुलस्य साध्वी
दुर्योधनस्य महिषी प्रियसङ्करस्य ।
विस्मृत्य पाण्डु-धृतराष्ट्र-पितामहादीन्
गन्धर्ववीरपशुभिः परिभू(भ्र)यते स्म ॥

युधिष्ठिरः—(श्रुत्वा दुर्योधनान्तःपुर(रे) महतीमपायशङ्कामाविष्कुर्वन्नाह)अयि ! वत्स ! स्वगोत्रपरिभवाविष्कारनिष्ठुरः शब्दः । अद्याप्यभ्रान्त एवासि । कः कोऽत्र ? चापं चापम् ( इति चापारोपणमभिनयन् सम्भ्रमादुत्तिष्ठति ) " इति ।

केचित् तु स्थानेऽस्यानुनयारत्योर्ग्रह-निग्रहरूपं शमनं पठन्ति । यथा पार्थविजये—

" भीमः—आः ! क एष मयि स्थिते भरतकुलं परिभवति ?, अतः परं न मर्षयामि । " इति ।

अत्र 'अयि वत्स ! स्वगोत्र-' इत्यादिपूर्वदर्शितेन युधिष्ठिरसंरम्भेण भीमस्यानुनयग्रहणम् ।

अरतिनिग्रहो यथा वेणीसंहारे—

" सखी—जइ एवं ता कहेहि जेण म्हे पडिट्ठावयंतीउ पसंसाए देवदाणं संकित्तणेण दुत्ता(व्वा)दिपरिग्गहेण पडिहणिस्सामो ।"[1]

पुनः स्वावसरे--

" भानुमती—( अर्घपात्रं गृहीत्वा सूर्याभिमुखं स्थित्वा ) भयवं ! अंबरमहासरेकसहस्सवत्त ! दिसावहूमुखमंडणकुंकुमविसेसय ! सयलभुवणरयणप्पईव ज्ज इह सिविणयदंसणे जं किंचि अच्चाहिदं तं भयवदो पणामेण समादुणो अय्यउत्तस्स कुसलपरिणामं मोदु त्ति । "[2]

अत्र दुःस्वप्नदर्शनोद्भूताया अरतेर्निग्रह इति ॥

अथ पुष्पम्—

पुष्पं वाक्यं विशेषवत् ॥ ४९ ॥

पूर्वं स्वयमन्येन वा केनचित् प्रयुक्तं वचनमपेक्ष्य यद् विशेषयुक्तं

---

१ यदि एवं तदा कथय येन वयं प्रतिष्ठापयन्त्यः प्रशंसया देवतानां सङ्कीर्तनेन, दूर्वाऽऽदिपरिग्रहेण प्रतिहनिष्यामः । २ भगवन् ! अम्बरमहासरएकसहस्रपत्र ! दिग्वधूमुखमण्डनकुङ्कुमविशेषक ! सकलभुवनरत्नप्रदीप ! अयेह स्वप्नदर्शने यत् किंचिदत्याहितं तद् भगवतः प्रणामेन सभ्रातुरार्यपुत्रस्य कुशलपरिणामं भवतु इति ।

वचनं प्रयुज्यते तेनान्येन वा तत् पूर्वस्माद् विशेषवत् । तच्च वाक्यं पुष्पमिव पुष्पम् । केशरचनायाः पुष्पमिव पूर्ववाक्यस्यालङ्कारकारित्वात् । यथा विलक्षदुर्योधने—" भीष्मः—

एतत् ते हृदयं स्पृशामि यदि वा साक्षी तवैवात्मजः
सम्प्रत्येव तु गोग्रहे यदभवत् तत् तावदाकर्ण्यताम् ।
एकः पूर्वमुदायुधैः स बहुभिर्दृष्टस्ततोऽनन्तरं
यावन्तो वयमाहवप्रणयिनस्तावन्त एवार्जुनाः ॥ "

अत्रोत्तरार्धं विशेषवद् वाक्यम् ।

यथा वा सत्यहरिश्चन्द्रे—

" वसुभूतिः—( सरोषं राजानं [प्र]ति )

न नाम स्युः स्वर्ण–क्षिति–सुत–कलत्राणि यतिनां
तदस्मै यद् दत्तं तदिह निखिलं भस्मनि हुतम् ।
विहाय व्यामोहं विमृश विमृशाद्यापि नृपते !
तपोव्याजच्छन्नं किमपि नियतं दैवतमिदम् ॥

कुलपतिः—( सोपहासम् ) अरे मुखर ! सचिवापसद ! चिराद् यथार्थमभिहितवानसि । दुस्तपतपःकरकलितस्वर्गापवर्गशर्मणो मर्त्यापदेशेन दैवतान्येव मुनयः । "

अत्र वसुभूतिवाक्यादुत्तरवाक्यं समर्थकत्वेन विशेषवदिति ॥ ४९ ॥

अथ प्रगमनम्—

प्रगमः प्रतिवाक्श्रेणिः

प्रश्नप्रतिपन्थिनी वाक् प्रतिवाक् तस्याः श्रेणिः । अपकर्षतो द्वे प्रतिवचने, उत्कर्षतो बहून्यपि । यथा वेणीसंहारे—

" भानुमती—अय्यउत्त ! अदिमित्तं मे संका बाधदि । ता अणुमण्णेदु मं अज्जउत्तो ।[1]

---

१ आर्यपुत्र ! अतिमात्रं मे शङ्का बाधते, तदनुमन्यतां मामार्यपुत्रः ।

" राजा—अयि देवि !

किं नो व्याप्तदिशां प्रकम्पितभुवामक्षौहिणीनां फलं ?
किं द्रोणेन किमङ्गराजविशिखैरेवं यदि क्लाम्यसि ।
भीरु ! भ्रातृशतस्य मे भुजवनच्छायासुखापाश्रिता
त्वं दुर्योधनकेश(स)रीन्द्रगृहिणी शङ्कास्पदं किं तव ? ॥

भानुमती—अय्यउत्त ! न हु मे किंचि संका तुम्हेसु सन्निहिदेसु ।" इति ।

यथा वा नलविलासे तृतीयेऽङ्के—

दमयन्ती—( भुजमवलम्बिते राजनि क्रमादाह ) " जइ एवं मुंच मे पाणिं ।

राजा—कथमपराधकारी मुच्यते ?

दमयन्ती—किं[3] एदिणा अवरद्धं ?

राजा—एतेन त्वत्प्रतिकृतिमालिख्याहमियति विरहानले पातितः ।

दमयन्ती—(स्मित्वा) जइ एवं ता अहं पि [ते] पाणिं गहिस्सं । तव पाणिलिहिदेण पडेण अहं पि एदावत्थसरीरा जादा । " इति ॥

अथ वज्रम्—

वज्रं प्रत्यक्षकर्कशम् ।

यन्निष्ठुरत्वात् प्रत्यक्षरूक्षवाक्यं यच्च पूर्वप्रयुक्तस्यान्यवाक्यस्यानुष्ठानस्य वा प्रध्वंसकं तद् वज्रमिव वज्रम् । यथा वेणीसंहारे—

" अश्वत्थामा—( कर्णमुद्दिश्य ) रे रे राधागर्भभारभूत ! सूतापसद !

कथमपि न निषिद्धो दुःखिना भीरुणा वा
द्रुपदतनयपाणिस्तेन पित्रा ममाद्य ।

---

१ आर्यपुत्र ! न हि मे किञ्चित् शङ्का युष्मासु सन्निहितेषु ।

२ यदि एव मुञ्च मे पाणिम् । ३ किमेतेनापराद्धम् ?

४ यदि एव तदाऽहमपि ते पाणिं ग्रहीष्ये । तव पाणिलिखितेन पटेनाहमप्येतदवस्थशरीरा जाता ।

तव भुजबलदर्पाध्मायमानस्य वामः
शिरसि चरण एष न्यस्यते वारयैनम् ॥ ”

तथा कृत्यारावणे द्वितीयेऽङ्के—

“ रावणः—विदेहराजपुत्रि !

विक्रमेण मया लोकास्त्वया रूपेण निर्जिताः ।
सब्रह्मचारिणमतो भजमानं भजस्व माम् ॥

सीता—हंदास ! अप्पा दाव तए न निजिदो, का गणणा लोएसु[1] ? ”

अनेन प्रत्यक्षकर्कशेन वाक्येन रावणवचनं प्रध्वस्तम् ।

यथा [वा] रघुविलासे—

“ रामः—( विराधवेषं रावणं प्रति साक्षेपम् )
युद्धश्राद्धमयं सकुड्मिमतटीशाणानिशाताश्रयो(? या)
देवीमप्यनलम्भविष्णव इमे त्रातुं प्रवृत्का यदि ।
मथ्नन्तः पृथुपुङ्खपत्रपवनैर्धम्मिल्लमाल्याश्रियं
निर्भिद्युः कथमिद्धकीकशघनां पौलस्त्यकण्ठाटवीम् ? ॥ ”

यथा वाऽत्रैव—

वैनतेयः—( रामं प्रति ) अजितेन्द्रियः खलु दुरात्मा रावणो न क्षाम्यति कलितसौभाग्यसाराणां परदाराणाम्, तदियमार्या वैदेही कचिदपि गोपयितुमुचिता ।

लक्ष्मणः—अजितेन्द्रियः खलु दुरात्मा सर्पहासो न क्षाम्यति पापीयसां पुंसाम्, तदियमार्या वैदेही न कचिदपि गोपयितुमुचिता । ” इति ।

अनेन वैनतेयवचनं प्रध्वस्तमिति ॥

अथोपन्यासः—

उपपत्तिरुपन्यास

कश्चिदर्थं विधातुं योपपत्तिर्युक्तिः स उपन्यासः । यथा कृत्यारावणे—

---

1 हताश ! आत्मा तावत् त्वया न निर्जितः, का गणना लोकेषु ?

रावणः—सीते ! आरुह्यतां पुष्पकम् ।

सीता—हताास ! अवि मरिस्सं न पुण आरुहिस्सं ।

रावणः—आः ! किं बहुना ? यावत् करेण दृढपीडितमुष्टियन्त्रमुत्खाय चन्द्रकिरणद्युतिचन्द्रहासेन त्वत्पुरो बहुशिरःकमलोपहार आरभ्यते, समधिरोह शिवाय तावत् ।

सीता—वरं अत्तणो सरीरस्स अच्चाहिदं, न उण तवोधणाणं । इयं अधिरुहामि मंदभाइणी । हा अज्जपुत्त ! ( इति रुदती आरोहं नाटयति ) " इति ।

यथा वा रघुविलासे—

" विराधवेषो रावणः—( रामं प्रति ) आगन्तवो यूयम् , अहं पुनराकलितविपिनकुहरो वनेचरदेशीयः प्रभूतान्तरायं सम्परायं च रावणप्रमुखेभ्यो रक्षोभ्यः सम्भावयामि भवताम् । वधूवागुरानियन्त्रितमनसश्च कुत एव योध्धुमलम्भविष्णवः । तदियमार्या वैदेही किमपि वनकुहरमलङ्करुताम् । "

इयमपहारार्थिना रावणेन सीतामेकाकिनीं कर्तुं युक्तिर्दर्शिता । इति ॥

अथानुसर्पणम्—

नष्टेष्टेहाऽनुसर्पणम् ॥ ९० ॥

पूर्वमुपलब्धस्य पुनरन्तरितस्येतिवृत्तवशादभिलषितस्यार्थस्येहाऽन्वेषणमनुसर्पणम् । यथा पार्थविजये द्वितीयेऽङ्के द्रौपदी युधिष्ठिरमुद्दिश्याह—

" महाराय ! इमाहिं य्येव दिवसपरिवत्तणगणणाहिं किणीभूदपरिभवुव्वेयदुक्खस्स मे हिययस्स पम्हुट्ठो वि(चि)य अणज्जदुस्सासणेण अत्तणो केसग्गहावमाणवुत्तंतो । "

---

१ हताश ! अपि मरिष्यामि, न पुनरारोक्ष्यामि । २ वरमात्मनः शरीरस्यात्याहितम्, न पुनस्तपोधनानाम् । इयमधिरोहामि मन्दभागिनी । हा आर्यपुत्र !

३ महाराज ! इमाभिरेव दिवसपरिवर्तनगणनाभि किणीभूतपरिभवोद्वेगदुःखस्य मे हृदयस्य प्रस्मृत एवानार्यदुःशासनेन आत्मनः केशग्रहापमानवृत्तान्तः ।

अत्र प्रागनुभवाद् दृष्टं निष्प्रतीकारकालहरणात् प्रस्मृतं नष्टमिति ब्रुवती पुनस्तमनुस्मरतीति ॥ ५० ॥

एतानि प्रतिमुखसन्धेरङ्गानि त्रयोदशेति ।

अथ गर्भसन्धेरङ्गानि व्याख्यातुमुद्दिशति—

सङ्ग्रहो रूपमनुमा प्रार्थनोदाहृति क्रम ।
उद्वेगो विद्रवश्चैतद् गुणत कार्यमष्टकम् ॥ ५१ ॥
आक्षेपोऽधिबलं मार्गोऽसत्याहरण–तोटके ।
पञ्चैतानि प्रधानानि गर्भेऽङ्गानि त्रयोदश ॥ ५२ ॥

गुणत इति गुणभावेन गुणमुपकारमपेक्ष्य वा । तेन फलोद्भेददर्शनार्थं सङ्ग्रहोऽवश्यं निबन्धनीयः । आक्षेपादीनि तु मुख्यानीति ॥ ५१–५२ ॥

अथ सङ्ग्रहः—

सङ्ग्रहः साम–दानादि

साम–दाने भेद–दण्डयोरुपलक्षणम् । आदिशब्देन मायेन्द्रजालादिसङ्ग्रहः । यथा रत्नावल्याम्—

"राजा— वयस्य ! न खलु किञ्चित् त्वयि न सम्भाव्यते ।" इति साम ।

सङ्केतादिवार्तां श्रुत्वा कटकवितरणं तु दानम् । तथा रघुविलासे पञ्चमेऽङ्के क्रमात् पवनवेषो राक्षसः प्राह—"प्रसीदतु देवः ।

रावणः—गृहाण प्रसादम् । (पुनः प्रतीहारं प्रति) वराहतुण्ड ! समादिश कुमारं कुम्भकर्णं यथा– पवनं किष्किन्धाराज्ये त्वरितमभिषिञ्च ।"

एष दू(दौ)त्यार्थमागतवतो वालितनयस्य क्षोभार्थं कृतको हनूमत्पितुः सुग्रीवाद् भेदः प्रयुक्तः ।

यथा वाऽत्रैव चतुर्थे[ऽङ्के]—"रावणः—

यायावरेण किमनेन वनेचरेण ? मां स्थावरं चरमुपास्स्व कुरङ्गकाक्षि ! ।
किं वा स्तुवे तव पुरश्चतुरस्थितीनां वैदग्ध्यसौरभवती भवती प्रकाण्डम् ॥

सीता—को वि(वा) जाजावरो को वि(वा) थावरु त्ति विवेगं लक्ख- णनारायपद्धई वावि[करि]स्सइ।

रावणः—( सरोषं चन्द्रहासं परामृश्य )

प्रेमावनद्धहृदयः सर्वं लङ्केश्वरः सुदति ! सोढा।
सोढा न चन्द्रहासः पुनरयमुल्लुण्ठवृत्तानाम् ॥"

एष सीताक्षोभ[ ] रावणेन दण्डः प्रयुक्तः। मायाप्रयोगश्चात्रैव कृतकलक्ष्मण-सुग्[ ]-रावण-सीताघटनादिको निबद्ध इति॥

अथ रूपम्—

रूपं नानार्थसंशयः।

नान[ ]र्थानां संशयोऽनवधारणं रूपमिव रूपम्। अनियतो ह्याकारो रूपमु[ ]। मुखसन्ध्यङ्गाद् युक्तेः कृत्यविचाररूपत्वेन नियता- काराया अस्य भेदः। यथा कृत्यारावणे रामो जटायुपमप्रत्यभिजानन्नाह—

" गिरिरयममरेन्द्रेणाद्य निर्लूनपक्षः
कृतरिपुरसुरेशैः शातितो वैनतेयः।
अपरमिह मनो मे यः पितुः प्राणभूतः
किमुत वत स एष व्यते( पे ? ती )तायुर्जटायुः ॥" इति।

अन्ये त्वधीयते—' रूपं वितर्कवद् वाक्यम् ' इति। यथा रत्नावल्यां राजा क्रमादाह—

" प्रणयविशदां दृष्टिं वक्त्रे ददाति न शङ्किता
घटयति घनं कण्ठाश्लेषे रसान्न पयोधरौ।
वदति बहुशो गच्छामीति प्रयत्नधृताऽप्यहो !
रमयतितरां सङ्केतस्था तथापि हि कामिनी ॥

कथं चिरयति वसन्तकः? किं नु खलु विदितः स्यादयं वृत्तान्तो देव्याः?"
इत्यनेन रत्नावलीसमागमप्राप्त्यानुगुण्येनैव देवीशङ्कया वितर्काद् रूपमिति।

---

१ कोऽपि(वा) यायावर कोऽपि(वा) स्थावर इति विवेकं लक्ष्मणनाराचपद्धतिराविष्करिष्यति।

अन्ये तु 'चित्रार्थे रूपकं वचः' इति पठन्ति। यथा वेणीसंहारे सुन्दरकेण चित्रसङ्ग्रामवर्णनमिति॥

अथानुमानम्—

अनुमा निश्चयो लिङ्गात्

लिङ्गाद्धेतोर्नान्तरीयकस्यलिङ्गिनो निश्चयोऽनुमानम्। निश्चयरूपत्वादेव चोहरूपाया युक्तेर्भिद्यते। यथा भासकृते स्वप्नवासवदत्ते—शेफालिकामण्डपशिलातलानवलोक्य वत्सराजः—

" पादाक्रान्तानि पुष्पाणि सोष्म चेदं शिलातलम्।
नूनं काचिदिहासीना मां दृष्ट्वा सहसा न(ग)ता॥"

पूर्वार्द्धं लिङ्गमुत्तरार्धमनुमानम्।

यथा वा यादवाभ्युदये षष्ठे गर्भान्ते(ङ्के)रुक्मिणीमवलोक्य कृष्णः—

" अस्यां मृगीदृशि दृशोरमृतच्छटायां
देवः स्मरोऽपि नियतं विततामिलाषः।
एतत्समागममहोत्सवबद्धतृष्ण—
माहन्ति मामपरथा विशिखैः कथं सः?॥" इति॥

अथ प्रार्थना—

प्रार्थना भावयाचनम्॥ ९३॥

भावानां साध्यफलोचितानां रति-हर्षोत्सवादीनां याचनं प्रार्थना। यथा देवीचन्द्रगुप्ते चतुर्थेऽङ्के चन्द्रगुप्तः—

" विये(प्रिये) माधवसेने! त्वमिदानीं मे बन्धमाज्ञापय।
कण्ठे किन्नरकण्ठि! बाहुलतिकापाशः समासज्यतां
हारस्ते स्तनबाम्धवो मम बलाद् बध्नातु पाणिद्वयम्।
पादौ त्वज्जघनस्थलप्रणयिनी सन्दानयेन्मेखला
पूर्वं त्वद्गुणबद्धमेव हृदयं बन्धं पुनर्नार्हति॥"

अत्र रते प्रार्थना।

तथा कृत्यारावणे चतुर्थेऽङ्के सीताहरण-भ्रातृदुःखाच दुःखितो विफलान्वेषणो लक्ष्मणः—

" तदपि नामायमस्मद्वृत्तान्तस्य प्रतिक्षणमुपचीयमाननायकव्यसनभाजोऽभ्युदयावसानः संहारो नाटकस्येव भवेत्। "

अत्राभ्युदयात्मक उत्सवो लक्ष्मणेनार्थितः।

केचिदभ्यर्थनामात्रं प्रार्थनामाहुः। यथा रघुविलासे कृतकहनूमत्पितृवेषो राक्षसः—( रावणं प्रति )

" यद् भग्नं विपिनं धनुर्धरकलादक्षो यदक्षो हतः
शिक्षां लङ्घयतः क्षपाचरपतेर्यन्मूर्ध्नि दत्तं पदम्।
यद् वेश्मानि परःशतानि शिशुना क्षुण्णानि कापेयत-
स्तत् क्षन्तव्यमशेषमेष पुरतस्ते देव! बद्धोऽञ्जलिः॥" इति।

केचित् तु प्राक्तनमिदं चाङ्गं न मन्यन्ते॥ ५२॥

अथोदाहृतिः—

उदाहृतिः समुत्कर्षः

लोकप्रसिद्धवस्त्वपेक्षया यः समुत्कर्षः समुत्कृष्टोऽर्थः स उत्कर्षाहरणादुदाहृतिः। यथा रत्नावल्याम्—" राजा—अहो! महदाश्चर्यम्!

मनः प्रकृत्यैव चलं दुर्लक्ष्यं च तथापि मे।
कामेनेदं कथं विद्धं समं सर्वैः शिलीमुखैः ?॥"

अत्रेतरधन्विभ्यो मन्मथस्य युगपत् सर्वैः शरैः स्वभावचपलदुर्लक्ष्यमनोवेधेन समुत्कर्षः॥

अथ क्रमः—

क्रमो भावस्य निर्णयः।

भावस्य पराभिप्रायस्याथवा भाव्यमानस्यार्थस्योह-प्रतिभाऽऽदिव-

शान्निर्णयो यथावास्थितरूपनिश्चयः क्रमः। बुद्धिस्तत्र क्रमते न प्रतिहन्यत इत्यर्थः। यथा देवीचन्द्रगुप्ते—

"चन्द्रगुप्तः—(ध्रुवदेवीं दृष्ट्वा स्वगतमाह)इयमपि देवी तिष्ठति सैषा—

रम्यां चारतिकारिणीं च करुणां शोकेन नीता दशां
तत्कालोपगतेन राहुशिरसा गुप्तेव चान्द्री कला।
पत्युः क्लीबजनोचितेन चरितेनानेन पुंसः सतो
लज्जा-कोप-विषाद-भीत्यरतिभिः क्षेत्रीकृता ताम्यति॥"

अत्र ध्रुवदेव्यभिप्रायस्य चन्द्रगुप्तेन निश्चयः।

तथा रत्नावल्याम्—

"ह्रिया सर्वस्यासौ हरति विदिताऽस्मीति वदनं
द्वयोर्दृष्ट्वाऽऽलापं कलयति कथामात्मविषयाम्।
सखीषु स्मेरासु प्रकटयति वैलक्ष्यमधिकं
प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरम्(रा)॥"

अत्र राज्ञा भाव्यमानायाः सागरिकायाः स्वरूपावस्थानिर्णयः कृतः।

अन्ये तु 'क्रमः सञ्चिन्त्यमानाप्तिः' इत्याहुः। यथा रत्नावल्यां वत्सराजस्य सागरिकासमागममभिलषतो विदूषकेणोपवने योजनम्।

अन्ये तु भविष्यदर्थतत्त्वोपलब्धिं क्रममिच्छन्ति। यथा वेणीसंहारे—

"कृपः—राजन् दुर्योधन! महान् खलु द्रोणपुत्रेण योद्धुमध्यवसितः समरभारः। भवता च कृतपरिकरोऽप्यमुच्छेत्तुं लोकत्रयमपि समर्थः किं पुनरेतद् युधिष्ठिरबलम्?" इति।

अथोद्वेगः—

उद्वेगो भीः

चौर-नृपारि-नायिकादिभ्यो भयमुद्वेगः। यथा अमात्यशङ्कुकविरचिते चित्रोत्पलावलम्बितके प्रकरणे पञ्चमेऽङ्के नेपथ्ये सचीत्कारम्—

" [1]गिण्हेध ले ! गिण्हेध । वेढेध ले ! वेढेध । (सर्वे सभयमवलोकयन्ति)

स्थविरः—हा ! धिक् कष्टं दस्यवः सम्पतन्ति । किमत्र शरणं प्रपद्येमहि ? "

अत्र नायिका-सखी-स्थविरादीनां राजगृहभङ्गेन विद्रुतानां दस्युभ्यो भयम् ।

तथा मृच्छकट्यां सार्थवाहचारुदत्तस्य चौर्याभिशापजं नृपाद् भयम् ।

तथा वेणीसंहारे पञ्चमेऽङ्के नेपथ्ये कलकलानन्तरम्—

" भो भो दुर्योधनानुजीविनः कौरवभटाः ! किमिदमस्मद्भयादयथायथं सञ्चरन्ति भवन्तः ?

धृतराष्ट्रः—( साशङ्कम् ) सञ्जय ! ज्ञायतां किमेतदिति ।

सञ्जयः—( उत्थाय नेपथ्याभिमुखमवलोक्य ) तात महाराज !
प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः ।

सर्वे—( साशङ्कम् ) कश्च-कश्च ?

सञ्जयः—स कर्णारिः स च क्रूरो वृककर्मा वृकोदरः ॥

गान्धारी—[2]जाद ! किं संपदं अवलंबणं ? " इति ।

एतदरिभयम् ।

तथा रत्नावल्याम्—

" सागरिका—[3]वरं दाणि अहं सयं य्येव अत्ताणयं उव्वंधिय उवम(र)दा । न उण जाणिदसंकेतवुत्तंताए देवीए सुसंगदा विय परिभूद म्हि । ता जाव इध असोए गदुअ जहासमीहिदं करिस्सं । "

---

१ गृह्णीत रे गृह्णीत वेष्टध्व रे वेष्टध्वम् । २ जात ! किं साम्प्रतमवलम्बनम् ? ।
३ वरमिदानीमहं स्वयमेवात्मानमुद्बध्योपमृ(र)ता । न पुनर्ज्ञातसङ्केतवृत्तान्तया देव्या सुसङ्गतेव परिभूताऽस्मि, तद् यावदत्राशोके गत्वा यथासमीहितं करिष्ये ।

अत्र नायिकातो भयम् ।

अथ विद्रवः—

द्रव शङ्का

भय-त्रासकारिणो वस्तुनो या शङ्काऽपायकारकत्वसम्भावना सा द्रवति श्लथीभवति हृदयमनयेति द्रवः । उपनतं भयमुद्वेगः, तत्सम्भावना तु विद्रवः । यथा कृत्यारावणे षष्ठेऽङ्के शान्तिगृहस्थे रावणे नेपथ्ये—

" हा अज्जउत्त ! परित्तायाहि परित्तायाहि ।

प्रतीहारी—( श्रुत्वा ससम्भ्रममात्मगतम् ) अम्मो ! भट्टिणी वि(चि)अक्कंददि । ( प्रकाशम् ) भट्टा ! अंतेउरे महंतो कलयलो सुणीयदि ।

रावणः—ज्ञायतां किमेतद् ? " इति ।

अत्र रावणस्य शङ्का ।

ये त्वत्र शङ्कां त्रासरूपं ससम्भ्रममङ्गमाहुः, तद् विद्रवोद्वेगाभ्यां गतार्थमिति ।

अथाक्षेपः—

आक्षेपो बीजप्रकाशनम् ॥ ६४ ॥

प्रात्याशावस्थानिबद्धस्य बीजस्य मुख्यकार्योपायस्य प्रकाशनं प्रकर्षेणाविर्भावनमाक्षेपः । यथा वेणीसंहारे " सूतः—

दत्त्वा द्रोणेन पार्थादभयमपि न संरक्षितः सिन्धुराजः
क्रूरं दुःशासनेऽस्मिन् हरिण इव कृतं भीमसेनेन कर्म ।
दुःसाधामप्यरीणां लघुमिव समरे पूरयित्वा प्रतिज्ञां
नाहं मन्ये स कामं कुरुकुलविमुखं दैवमेतावताऽपि ॥ "

अत्र पाण्डवानां राज्यप्राप्तिरुपकार्योपायस्यौन्मुख्याविष्करणं कृतम् ।

---

१ हा ! आर्यपुत्र ! परित्रायस्व परित्रायस्व । २ अहो ! भर्त्री एवाक्रन्दति । भर्तः ! अन्तःपुरे महान् कलकलः श्रूयते ।

अथवा बीजस्य हृदयभूमिनिगूढत्वादभिप्रायस्य बहिष्कर्षणमाक्षेपः। यथा रत्नावल्यां वासवदत्तायामेव सागरिकेति राज्ञा विदूषकेण च परिगृहीतायां तदुक्तिषु—“ प्रिये सागरिके !

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भागर्भनिभं तथो(वो)रुयुगलं बाहू मृणालोपमौ।
इत्याह्लादकराखिलाङ्गि ! रभसा निःशङ्कमालिङ्ग्य मा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय॥”

इत्यादिषु राज्ञा स्वाभिप्रायबहिष्प्रकाशनम्। केचिदेतदङ्गं न मन्यन्त इति॥ ५४॥

अथाधिबलम्—

अधिबलं छ(ब)लाधिक्यम्

परस्परवञ्चनप्रवृत्तयोर्यस्य बुद्धिसहायादिबलाधिक्येन यत्कर्मेतरवति सन्धातुं समर्थं तत् कर्म छ(ब)लविषये अधिकबलयोगादधिबलम्। यथा रत्नावल्याम्—

“ किं पद्मस्य रुचं न हन्ति नयनानन्दं विधत्ते न वा ?
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ?।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्गतो
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे॥”

इति पाठानन्तरं राज्ञा वासवदत्ताया मुखोद्घाटने प्रत्यभिज्ञानम्। अत्र सागरिकावेषं धारयन्ती विदूषकबुद्धिदौर्बल्याद् वासवदत्ता राजानमभिसन्धत्ते।

कपटस्यान्यथाभावमन्ये अधिबलमाहुः। यथा रत्नावल्याम्—

“ राजा—एवमपि प्रत्यक्षदृष्टव्यलीकः किञ्चिद् विज्ञापयामि।

आताम्रतामपनयानि(मि) विलक्ष एष
लाक्षाकृतां चरणयोस्तव देवि ! मूर्ध्ना।

कोपोपरागजनितां तु मुखेन्दुबिम्बे
हर्तुं क्षमा यदि परं करुणा मयि स्यात् ॥ " इति ।

अत्र वासवदत्तां प्रति राज्ञो वचनं विफलं जातम् ।

एके तु सोपालम्भं वाक्यमधिबलमिच्छन्ति । यथा वेणीसंहारे पञ्चमेऽङ्के धृतराष्ट्रमुद्दिश्य भीमसेनः—" अलमिदानीं मन्युना ।

कृष्टा केशेषु कृष्णा नृपसदसि वधूः पाण्डवानां नृपैर्यैः
सर्वे ते क्रोधवह्नौ कृशशलभकुलावज्ञया येन दग्धाः ।
आतस्त्वां श्रावयेऽहं न खलु भुजबलश्लाघया नापि दर्पात्
पुत्रैः पौत्रैश्च कर्मण्यतिगुरुणि कृते तात ! साक्षी भव त्वम् ॥" इति ॥

अथ मार्गः—

मार्गस्तत्त्वार्थशंसनम् ।

परमार्थस्य वचनं सामान्येनोच्यमानं प्रकृतार्थेन यत् सम्बध्यते तन्मार्गः । यथा मुद्राराक्षसे—" राजा-( प्रविश्य स्वगतमाह )

राज्यं हि नाम राजधर्मानुवृत्तिर्दुःखितस्य नृपतेर्महदप्रीतिस्थानम् । कुतः ?

परार्थानुष्ठाने जडयति नृपं स्वार्थपरता
परित्यक्तस्वार्थो नियतमयथार्थः क्षितिपतिः ।
परार्थश्चेत् स्वार्थादभिमततरो हन्त ! परवान्
परायत्तः प्रीतेः कथमिव रसं वेत्ति पुरुषः ? ॥

अपि च दुराराधा लक्ष्मीरात्मवद्भी राजभिः । कुतः ?

तिक्ष्णादुद्विजते मृदौ परिभवत्रासान्न सन्तिष्ठते
मूर्खे द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्सु च ।
शूरेभ्योऽभ्यधिकं बिले(भे)त्युपहसत्येकान्तभीरूत(र)हो !
श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्या भृशम् ॥ " इति ।

यथा वा रघुविलासे चतुर्थेऽङ्के—" रावणः-( सविषादम् )

लङ्केश्वरे त्रिदशदर्पहरे विरागो
रागस्तु काननचरे जनकात्मजायाः ।
सौन्दर्य-विक्रम-कला-विभवानपेक्षः
प्रेम्णां विचारविमुखः खलु कोऽपि पन्थाः ॥"

एतत् तत्त्वार्थकथनं सामान्येनोक्तमपि प्रकृतेन सम्बध्यत इति ॥

अथासत्याहरणम्—

असत्याहरण छद्म

यथा मालति(वि)काग्निमित्रे यज्ञोपवीतबद्धाङ्गुष्ठो विदूषकः—(प्रविश्य ससम्भ्रममाह) परित्तायदु[1] परित्तायदु भवं ।

राजा—किमेतत् ?

विदूषकः—भो ! सप्पेण म्हि दट्ठो[2] ।

(सर्वे विदूषकं दृष्ट्वा विषण्णाः)

राजा—कष्टं क्व भवान् परिभ्रान्तः ?

विदूषकः—देवं[3] पेक्खिस्सं ति आचारपुप्फस्स कारणा पमदवणं गदु म्हि । तहिं च असोयत्थवगस्स पसारिदे अग्गहत्थे कोडरविणिग्गदेण सप्परूपेण कालेण म्हि लंभिदो । इमाणि दुवे दाढावणाणि ।"

अत्र राजप्रसादपरीक्षार्थं विदूषकेण केतकीकण्टकक्षतस्यासत्या सर्पदंशता प्रकाशितेति ॥

अथ तोटकम्—

तोटकं गर्भितं वचः ॥ ९९ ॥

क्रोध-हर्षादिसम्भूतावेगगर्भितं वचनं तोटयति भिनत्ति हृदयमिति तोटकम् । यथा रामाभ्युदये चतुर्थेऽङ्के—

---

१ परित्रायतां परित्रायतां भवान् ।  २ भोः ! सर्पेणास्मि दष्टः ।

३ देव प्रेक्षिष्ये इत्याचारपुष्पस्य कारणात् प्रमदवनं गतोऽस्मि । तत्र चाशोकस्तबकस्य प्रसारित हस्ताग्रे कोटरविनिर्गतेन सर्परूपेण कालेनास्मि लब्धः । इमौ द्वौ दंष्ट्राव्रणौ ।

" इन्द्रजित्—तात ! किमिदमनुचितमारब्धं तातेन ? यदयमकाण्ड एव कुम्भकर्णः प्रतिबोध्यते । किमत्र न कश्चित् क्षुद्रतापसोपमर्दाय सम्भावितस्तातेन ? अपि च—

रक्षोवीरा दृढोरःप्रतिफलनदलत्कालदण्डप्रचण्डा
दोर्दण्डाकाण्डकण्डूविषमनिकषणत्र्यास्ति(त्रासि)तक्ष्माधरेन्द्राः ।
याताः कामं न नाम स्मृतिपथमपथप्रस्थितेन्द्रानुसारी
स्वर्वासिक्लिष्टदृष्टः कथमहमपि ते विस्मृतो मेघनादः ! ॥"

एतत् क्रोधादावेगवचनम् ।

यथा रघुविलासे चतुर्थेऽङ्के—

" रावणः— वक्त्राणि हे ! हसत गायत तारणं(तारतारं)
नेत्राणि ! चुम्बत विहस्य च कर्णपाली[म्] ।
दोर्वल्लयः ! कुरुत ताण्डवडम्बरं च
श्रीरावणं ननु विदेहसुता रिरंसुः ॥ "

इदं हर्षादावेगगर्भं वचः ॥ ५५ ॥

एतानि गर्भसन्धेस्त्रयोदशाङ्गानि ।

अथात [आ]मर्शसन्धे(न्धे)रङ्गानि व्याख्यातुमुद्दिशति—

द्रवः प्रसङ्गः सम्फेटोऽपवादश्छादनं द्युतिः ।
खेदो निरोधः संरम्भो भवेयुर्गुणतो नव ॥ ५६ ॥
शक्ति-प्ररोचना-दान-व्यवसायास्तु मुख्यतः ।
त्रयोदशाङ्गान्यामर्शे

द्रवादीनि नव प्रयोजनमपेक्ष्य गौणतया बध्यन्ते, शक्त्यादीनि चत्वारि पुनः प्राधान्येन ।

अथ द्रवः—

द्रवः पूज्यव्यतिक्रमः ॥ ५७ ॥

व्यतिक्रमो मार्गाचलनम् । यथा रत्नावल्यां सन्निहितं भर्तारमवगणय्य विदूषकस्य सागरिकायाश्च वासवदत्तया बन्धनमिति ॥ ५७ ॥

अथ प्रसङ्गः—

प्रसङ्गो महता कीर्तिः

कीर्तिः संशब्दनम् । यथा वेणीसंहारे षष्ठेऽङ्के—

" युधिष्ठिरः—( मुखं प्रक्षाल्योपस्पृश्य च ) एष तावज्जलाञ्जलिर्गाङ्गेयाय गुरवे प्रपितामहाय शान्तनवे । अयमपि पितामहाय विचित्रवीर्याय । ( सास्रम् ) तातस्याधुनाऽवसरः । अयमपि तत्रभवते स्वर्गस्थिताय गुरवे सुगृहीतनाम्ने पित्रे देवाय पाण्डवे । " इत्यादि ।

केचिदप्रस्तुतार्थवचनं प्रसङ्गमिच्छन्ति । यथा वेणीसंहारे षष्ठेऽङ्के " युधिष्ठिरः—( द्रौपदीं प्रति )

स कीचकनिषूदनो बक-हिडिम्ब-किर्मीरहा
मदान्धमगधाधिपद्विरदसन्धिस(र)म्भाशनिः ।
गदापरिघशोभिना भुजयुगेन तेनान्वितः
प्रियस्तव ममानुजोऽर्जुनगुरुर्गतोऽस्तं किल ! ॥

अत्र मायातपस्विना राक्षसेन व्यलीकभीमवधकथनात् युधिष्ठिरस्याप्रस्तुतः शोकः ॥

अथ सम्फेटः—

सम्फेट· क्रोधजं वचः ।

परस्परं क्रोधजन्मोत्तरप्रत्युत्तररूपः संलापः सम्फेटः । यथा वेणीसंहारे—

" भोः कौरवराज ! कृतं बन्धुनाशदर्शनमन्युना । मैवं विषादं कृथाः पर्याप्ताः पाण्डवाः समरायाहमसहाय इति ।

पञ्चानां मन्यरो(से)ऽस्माकं यं सुयोधं सुयोधन ! ।
दंशितस्याचशस्त्र[स्य] तेन तेऽस्तु रणोतत्रः(त्सवः) ॥ "

इत्थं श्रुत्वाऽस्त(सू)यारिमका(कां) निक्षिप्य कुमार(रे) धृष्ट(दृष्टि)मुक्तवान् धार्तराष्ट्रः—

'कर्ण-दुःशासनवधात् तुल्यावेव युवां मम ।
अप्रियोऽपि प्रियो योद्धुं त्व(त्व)मेव प्रियसाहसः ॥'

इत्येतद् भीम-दुर्योधनयोरन्योन्यं रोषमापणम् ।

यथा वा यादवाभ्युदये सप्तमेऽङ्के—

"बलभद्रः—( स्वगतम् ) कथमुपहसति नारदः ? भवतु । ( प्रकाशम् )

वृद्धोक्षस्य नृपस्य तस्य नियतं को नाम मल्लो युधि ?
व्याचष्टे किल यस्य विक्रमचणः पक्षं मुनिर्नारदः ।
कंसध्वंसकृतश्रमौ मधुरिपोर्बाहू तथाऽप्याहवे
क्षामस्थामलवानुरूपमचिरादाधास्यतः किञ्चन ॥

नारदः—( सरोषमिव )

कंसांसभित्तिमदमर्दनकेलिचञ्चोश्चक्रस्फुलिङ्गगणसङ्गपिशङ्गबाहुः ।
सम्पूरयिष्यति हरेरपि गाढरूढसङ्ग्रामदोहदमसौ मगधाधिनाथः ॥" इति ।

अथापवादः—

अपवादः परीवादः

परीवादः स्वपरदोषोद्घट्टनम् । यथा पुष्पदूषितके पञ्चमेऽङ्के—

"ब्राह्मणः—मार्जिता हि ब्राह्मणस्य मुखमधुरः कालपाशः । तथाहि—

हतः पुत्रो हतो भ्राता हतो मार्जितया पिता ।

तथाप्येतां स्वगोत्रघ्नीं निन्दामिव पिबामि च ॥" इति ।

अत्र स्वदोषोद्घट्टनम् ।

तथा रघुविलासे सप्तमेऽङ्के रावणं प्रति मारीचः—

" खण्डय न्यायतेजोभिः शूर ! कौलीनदुर्दिनम् ।
अनीति-धूमरी हन्ति यशश्चूताग्रमञ्जरीः ॥"

अत्र परदोषोद्घ[ट्ट]नमिति ॥

अथ च्छादनम्—

छादनं मन्युमार्जनम् ॥ ९८ ॥

मन्युरपमानो येन मार्ज्यते तत् छादनम् । यथा रत्नावल्याम्—

" सागरिका—दिट्ठिया[1] पज्जलिदो भयवं हु[या]सणो अज्ज करिस्सदि मे सयलदुक्खावसाणं ति । "

अन्ये तु कार्यार्थमसह्यस्याप्यर्थस्य सहनं छादनमामनन्ति । यथा श्रीशुक्तिवासकुमारविरचितेऽनङ्गसेनाहरिनन्दिनि प्रकरणे नवमेऽङ्के राजपुत्रचन्द्रकेतुना दत्तं कर्णालङ्कारयुगलं नायिकया माधव्या नायकस्य प्रेषितम् । नायकेन हरिनन्दिना पुष्पलकनामानं ब्राह्मणं राजबन्धनान्मोचयितुं तन्मात्रेऽतिसृष्टम् । तत् प्रत्यभिज्ञाय च स ब्राह्मणः पौरेषु प्रकाशितचौर्यो राज[ा]ज्ञया वध्यस्थानं नेतुमारब्धः । तन्मात्रा चागत्य हरिनन्दिने निवेदितम् । हरिनन्दिना च ब्राह्मणरक्षार्थं चौर्यमात्मनोऽङ्गीकृत्यायशो विसोढमिति ।

अन्ये त्वस्य स्थाने च्छलनमवमाननरूपमाहुः । यथा रामाभ्युदये सीतायाः परित्यागेनावमाननं छलनम् ।

अपरे तु छलनं सम्मोहमिच्छन्ति । यथा वेणीसंहारे षष्ठेऽङ्के—
" युधिष्ठिरः—( अश्रूणि मुञ्चन् चार्वाकमाह )

क(स)र्वथा कथय ब्रह्मन् ! सङ्क्षेपाद् विस्तरेण वा ।
वत्सस्य किमपि श्रोतुमेतद् दत्तमुरो मया ॥

राक्षसः—श्रूयताम् ।

तस्मिन् कौरव–पार्थयोर्गुरुगदाघोरध्वनौ संयुगे ।

द्रौपदी—( लब्धसंज्ञा ) अयि[2] ! तदो किम् ?

१ दिष्ट्या प्रज्वलितो भगवान् हुताशनोऽद्य करिष्यति मे सकलदुःखावसानमिति ।

२ अयि ! ततः किम् ?

राक्षसः—( आत्मगतम् ) कथं पुनरप्यनया लब्धा संज्ञा ? अय-मपहराम्यस्याः प्राणान् । ( प्रकाशम् )

शी(सी)री तत्क्षणमागतश्चिरमभूत् तस्याग्रतः सङ्गरः ॥

कञ्चुकी—नूनं तत्कृतोऽत्र कश्चिदपचारो भविष्यति ।

राक्षसः—

आलम्ब्य प्रियशिष्यतां तु हलिना संज्ञा रहः सा कृता ।
यामासाद्य कुरूत्तमः प्रतिकृतं दुःशासनारी गतः ॥" इति ।

अत्र तापसेन व्यामोह(ः) कृतः ॥ ५८ ॥

अथ द्युतिः—

तिरस्कारो द्युति.

यथा कृत्यारावणे मन्दोदरीं प्रति अङ्गदः—

" मा गास्तिष्ठ पुनर्व्रज क्षणमितो गत्वा पुनः स्थीयतां
यत्रास्ते भुजवीर्यदर्पितमदो विद्रावणो रावणः ।
मद्बाहुद्वयपञ्जरान्तरगता मूढे ! किमाक्रन्दसि ?
सिंहस्याङ्कमुपागतामिव मृगीं कस्त्वां परित्रास्यते ? ॥ "

तर्जनोद्वेजने द्युतिं केचिदिच्छन्ति । अपरे तु तर्जनाधर्षणे द्युतिं मन्यन्ते । तदेतन्मतद्वयमप्यर्थाभेदात् सङ्गृहीतम् । एवमन्यदपि साक्षात् पारम्पर्येण वा न्यक्कारपरं वाक्यं द्युतिरेव ॥

अथ खेदः—

खेदः श्रम. काय–मनोभव. ।

यथा विक्रमोर्वश्यां पुरूरवाः—

" अहो ! श्रान्तोऽस्मि । भवतु । अस्यास्तावद् गिरिनद्यास्तीरे स्थितस्तरङ्गवातं सेविष्ये । " इत्यादि । अत्र कायिकः ।

तथा रघुविलासे सप्तमेऽङ्के रावणः—( सखेदम् ).

" हुं शक्रः स जितो जितो धृतधृतः कैलासशैलोस्थ(प्य)रे !
क्रान्तं क्रान्तमिदं जगत् प्रतिभवा(ट)[?ग्रस्ता]सिकैर्बाहुभिः ।
याऽऽरम्भं(?) प्रति बन्धुबन्धनकथा लङ्कापतेर्जीवतः
कर्णेषु प्रथते किमेकमल(न)या णीत (नीतं) न विस्फूर्जित[म्] ! ॥ "

अत्र मानसः ।

तथा कृत्याराचणे लक्ष्मणः—

" मार्गाः कण्टकिनः प्रतप्तसिकतापांशूक्ष(रक)रा लङ्घिताः
क्रान्ताः शृङ्गवतां निकामपरुषाः स्थूलोपला भूमयः ।
भ्रातं(न्तं) दृप्तमृगेन्द्रनादजनितत्रासैः समं दन्तिभिः
पीतं च द्विपदानराजिकलुषव्यासङ्गतिक्तं पयः ॥ " अत्रोभयजः ।

यद्यपि श्रमोद्वेग-वितर्कादयो व्यभिचारिमध्ये लक्षयिष्यन्ते, तथापि रसविशेषपुष्ट्यर्थं सन्ध्यङ्गावसरेऽपि लक्ष्यन्त इति ॥

अथ विरोधः—

विरोधः प्रस्तुतज्यानिः

प्रस्तुतस्य कार्यस्य जा(ज्या)निरत्ययो विरोध इव विरोधः । यथा कृत्याराचणे सप्तमेऽङ्के—

" कञ्चुकी—( लक्ष्मण-विभी[ष]णौ प्रति ) कुमार ! एतत् ।

उभौ—किम् ?

कञ्चुकी—आः ! इदम् ।

उभौ—आर्य ! कथय कथय ।

कञ्चुकी—का गतिः ! श्रूयताम् । आर्या खलु सीता रावणाज्ञया किङ्करोपनीतं भर्तुर्मायाशिरोऽवलोक्य सखीभिराश्वास्यमानाऽपि निवृत्तप्रयोजना 'नाहमात्मानं धारयामि' इत्युक्त्वा ।

सर्वे—किं कृतवती ?

कञ्चुकी—यन्न शक्यते वक्तुम् ।

शशिन इव कला दिनावसाने कमलवनोदरमुत्सुकेव हंसी ।
पतिमरणरसेन राजपुत्री स्फुरितकरालशिखं विवेश वह्निम् ॥ "

अत्र सीताप्रत्यानयनस्य प्रस्तुतस्य विरोधः ।

अन्ये तु खेद-विरोधौ न मन्यन्ते, विद्रव-विचलने तु पठन्ति । तत्र विद्रवो बन्ध-वधाध्यवसा[या]दिः । यथा च्छलितरामे—

" येनावृत्य मुखानि साम पठतामत्यन्तमायासितं
बाल्याद् येन हृताक्षसूत्रवलयप्रत्यर्पणैः क्रीडितम् ।
युष्माकं हृदयं स एष विशिखैरापूरितां[स]स्थलो
मूर्छाघोरतमःप्रवेशविवशो बद्ध्वा लवो नीयते ॥" इति ।

वधाध्यवसायस्तु मृच्छकटिकायां चारुदत्तविषयः ।

तथा रत्नावल्याम्-" पुनर्वासवदत्ता—अज्जउत्त ! णं खु अत्तणो कारणा भणामि एसा मए निग्घिणहिअयाए संपदा सागरिया विवज्जदि ।" इति ।

अत्र सागरिकाया बन्ध-वधाभिभिर्विद्रवः ।

तथा वेणीसंहारे—" युधिष्ठिरः—कः कोऽत्र ? सनिषङ्गं धनुरुपनीयताम् । कथं न कश्चित् परिजनः ! भवतु वा । बाहुयुद्धसम्भावनाविहस्तमेनं दुरात्मानं गाढमालिङ्ग्य ज्वलितं ज्वलनमभिपतामि । " इति ।

अत्र सम्भ्रमात्मको विद्रव इति ।

शौर्य-कुल-विद्या-रूप-सौभाग्यादिसम्भवमात्मविकत्थनं तु विचलनम् । यथा वेणीसंहारे पञ्चमेऽङ्के—" तात ! अम्ब !

---

१ आर्यपुत्र ! ननु खल्वात्मन कारणाद् भणाम्येषा मम निर्घृणहृदयाया सम्प्रत् सागरिका विपद्यते ।

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते
तृणमिव परिभूतो यस्य गर्वेण लोकः ।
रणशिरसि निहन्ता तस्य राधासुतस्य
प्रणमति चरणौ वां मध्यमः पाण्डवेयः ॥

अपि च । तात !

चूर्णिताशेषकौरव्यः क्षीबो दुःशासनासृजा ।
भङ्क्त्वा सुयोधनस्योरू भीमोऽयं शिरसाऽर्चति ॥" इति ।

अत्र स्वगुणाविष्करणाद् विचलनमिति ॥

अथ संरम्भः—

संरम्भः शक्तिकीर्तनम् ॥ ९९ ॥

संरब्धानामुत्तरप्रत्युत्तरेणात्मशक्तिभाषणं संरम्भः । यथा वेणीसंहारे दुर्योधनं प्रति क्रमाद् " भीमः—अन्यच्च मूढः(ढ !)

शोकं स्त्रीवन्नयनसलिलैर्यत् परित्याजितोऽसि
भ्रातुर्वक्षःस्थलविघटने यच्च साक्षी कृतोऽसि ।
आसीदेतत् तव कुनृपतेः कारणं जीवितस्य
क्रुद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने ॥

राजा—दुरात्मन् ! भरतकुलापसद ! पाण्डवपशो ! नाहं भवानिव विकत्थनाप्रगल्भः । किन्तु—

द्रक्ष्यन्ति न चिरात् सुप्तं बान्धवास्त्वां रणाङ्गणे ।
मद्गदाभिन्नवक्षोऽस्थिवेणीकाभीमभूषणम् ॥" इत्यादीति ।

असंरब्धस्यापि दृश्यते । यथा वेणीसंहारे—" युधिष्ठिरः—

नूनं तेनाद्य वीरेण प्रतिज्ञाभङ्गभीरुणा ।
बध्यतां केशपाशस्ते स चास्याकर्षणक्षमः ॥" इति ।

सम्फेटे क्रोधेन भाषणमात्रम्, संरम्भे तु बलकीर्तनमित्यनयोर्भेद इति ॥ ५९ ॥

अथ शक्तिः—

क्रुद्धप्रसादनं शक्तिः

[ क्रुद्धस्य ] प्रसादनमनुकूलनु(नं) बुद्धि-विभवादिशक्तिकार्यत्वेन सा शक्तिः। यदि वा क्रुद्धस्य द्विषतः प्रकर्षेण सादनं विनाशनं शक्तिः। यथा रत्नावल्याम्—" राजा—

सव्याजैन( जैः श )पथैः प्रियेण वचसा चित्तानुवृत्त्या भृशं
वैलक्ष्येण परेण पादपतनैर्वाक्यैः सखीनां मुहुः।
प्रत्याप(स)त्तिमुपागता मम तथा देवी रुदत्या यथा
प्रक्षाल्ये च(व) तथैव बाष्पसलिलैः कोपोऽपनीतः स्वयम्॥" इति।

तथा कृत्यारावणे सप्तमाङ्कस्य पूर्वार्द्धे—" कष्टं भोः ! कष्टम्।

रामेण प्रलयेनेव महासत्त्वेन लीलया।
पातितोऽयं दशशिराः शृङ्गवानिव पर्वतः॥" इति।

अत्र विरोधिनो रावणस्य विनाशनमिति।

एके तु विरोधप्रशमनं शक्तिमामनन्ति। यथोत्तरचरिते—" लवः—

विरोधो विश्रान्तः प्रसरति रसो निर्वृतिघन-
स्तदौद्धत्यं(द्धत्यं) क्वापि व्रजति विनयः प्रह्वयति माम्।
झगित्यस्मिन् दृष्टे किमपि परवानस्मि यदि वा
महार्घस्तीर्थानामिह हि महतां कोऽप्यतिशयः !॥" इति।

एतदप्यत्रैवान्तर्भूतम्, प्रसादने प्रसत्तेरपि भावात्। अस्ति चात्र लवस्य क्रुद्धस्य मनःप्रसत्तिरिति।

प्रकृताभिप्रायविरुद्धाचरणहेतुरभिप्रायो भावान्तरमङ्गमत्रान्ये मन्यन्ते। यथा तापसवत्सराजे षष्ठेऽङ्के यौगन्धरायणस्य वासवदत्तां मरणाध्यवसायान्निवर्तयितुं भावः। तद्विरुद्धा चरि(चि)ताविरचनक्रियाऽभिप्रायान्तरात् कृतेति भावान्तरम्। तत्र हि " यौगन्धरायणः—भद्र विनीतक ! रचय चिताम्।" इति।

अन्ये तु शक्तेः स्थाने आज्ञां पठन्ति। युक्तायुक्तमविचार्य क्रोधाद्

यदाज्ञापनं साऽऽज्ञा । यथा कृत्यारावणे त्रिजटया दारुणिकाऽभिधाना राक्षसी पृष्टा—"[1]दारुणिए ! किं तुमं भणासि ?

दारुणिका—[2]अय्ये तियडे ! अवि नाम अप्पडिहदा आणा मम सरीरे निवडिस्सइ । न उण ईदिसं अकज्जं करइस्सं ।

त्रिजटा—[3]तहा वि तुमं दारुणिअ त्ति वुच्चसि !"

पुनः क्रमान्नेपथ्ये—

"[4]हा तियडे ! एसा दे पियसही सीदा भत्तुणो मायासिरदंसणुप्पत्ती-मरणनिच्छया अग्गिं पविसिउकामा ।

त्रिजटा—[5]हा हदम्हि मंदभाइणी मा दाणि दिव्वेण भत्तुणो आणा संवा(पा)दीयदि ।"

एतस्मादवसीयते सीताव्यापादनाय क्रोधाद् रावणेन दारुणिकाया आज्ञा दत्तेति ।

सर्वसन्धिष्वपि मतान्तराणि वृद्धोक्तत्वाद् भणितिभेदो दै(भेदाद् वै)चित्र्यस्य रञ्जकत्वाच्च प्रमाणान्येव । अत एव सर्वसन्धिष्वप्यङ्गसङ्घयाकरणमुदाहरणपरं द्रष्टव्यमिति ॥

अथ प्ररोचना—

भाविसिद्धिः प्ररोचना ।

निर्वहणसन्धौ भाविनोऽर्थस्य सिद्धिः सिद्धत्वेनोपक्रमणं प्रकर्षेण

---

१ दारुणिके ! किं त्वं भणसि ?

२ आर्ये त्रिजटे ! अपि नामाप्रतिहताऽऽज्ञा मम शरीरे निपतिष्यति, न पुनरीदृशमकार्यं करिष्ये ।

३ तथापि त्वं दारुणिकेत्युच्यसे !

४ हा ! त्रिजटे ! एषा ते प्रियसखी सीता भर्तुर्मायाशिरोदर्शनोत्पत्तिमरणनिश्चयाऽग्निं प्रवेष्टुकामा ।

५ हा ! हताऽस्मि मन्दभागिनी मा इदानीं दैवेन भर्तुराज्ञा संवा(पा)द्यते ।

रोच्यते दीप्यतेऽनया रूपकार्थ इति प्ररोचना । यथा वेणीसंहारे—
"पाञ्चालकः—( 'अहं च देवेन चक्रपाणिना'इत्युपक्रम्य ) कृतं सन्देहेन ।

पूर्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णाऽत्यन्तचिरोज्झिते च कबरीबन्धे करोतु क्षणम् ।
रामे शातकुठारभासुरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः ? ॥ "

अत्र युधिष्ठिरराज्याभिषेकस्य द्रौपदीकेशसंयमनस्य च भाविनोऽपि सिद्धत्वेन कल्पनम् ।

यथा वा राघवाभ्युदये सप्तमेऽङ्के—

" सीताया वदनं विकाशमयतां रामस्य शोकानलः
शान्तिं यातु सगीतयश्चलभुजैर्नृत्यन्तु शाखामृगाः ।
सन्धानाम बिभीषणः प्रयततां लङ्काधिपत्यश्रियः
सौमित्रेर्दशकण्ठकण्ठविपिनं कालः किर्याच्छिन्दतः ॥ " इति ।

अन्ये तु सत्कारादेशनं प्ररोचनामाहुः । यथा वेणीसंहारे—
" युधिष्ठिरः—( पुरुषमवलोक्य ) भद्र ! उच्यतां सहदेवः क्रुद्धस्य वृकोदरस्यापर्युषितां दारुणां प्रतिज्ञामुपलभ्य प्रनष्टस्य मानिनः कौरवनाथस्य पदवीमवेक्षितुमतिनिपुणमतयस्तेषु तेषु स्थानेषु परात्मवेदिनश्चारा मन्त्रिणः सचिवाश्च भक्तिमन्तः पटुपटहव्यक्तघोषणाः सुयोधनसञ्चारवेदिनः प्रतिश्रुतधन-पूजा-प्रत्युपक्रियाः सञ्चरन्तु समन्तपञ्चकमिति । धनपूजाप्रतिश्रवणप्रचोदिताः प्रत्युपकारे वर्तिष्यन्ते दुर्योधनप्रविलम्भवार्तायै । " इति ।

अन्ये त्वस्य स्थानेषु युक्तिं पठन्ति । युक्तिश्च सविच्छेदोक्तिः । यथा पुष्पदूषितके—" समुद्रदत्तः—

भर्ता तवाहमिति कष्टदशाविरुद्धं पुत्रस्तवैष कुत इत्यनुदारतैषा ।
शल्यं पुरः पतति किं करवाणि हन्त ! व्यक्तं विरौमि यदि साभ्युपपत्स्यते माम् ॥" इति ।

अथादानम्—

फलसामीप्यमादानम्

मुख्यफलस्य दर्शनमादानम् । यथा नागानन्दे— नायकमुद्दिश्य गरुडः—

" नागानां रक्षिता भाति गुरुरेष यथा मम ।
तथा सर्पाशनाकाङ्क्षा व्यक्तमद्यापनेष्यति । " इति ।

अत्र नागरक्षालक्षणस्य मुख्यफलस्य सामीप्यनिबन्ध इति ॥

अथ व्यवसायः—

व्यवसायोऽर्थ्यहेतुयुक् ॥ ६० ॥

' युगिति ' योजनं युक् । अर्थनीयफलस्य हेतुस्तद्योगो व्यवसायः । यथा रत्नावल्याम्—ऐन्द्रजालिकप्रवेशादारभ्य ' एक्को उण खेडओ तए अवस्सं पेखिदव्वो '[1] इति यावत् । अत्र हि यौगन्धरायणेन यदङ्गीकृतं तन्निष्पादकहेतुसमागमः ।

अन्ये तु—' व्यवसायः स्वशक्त्युक्तिः ' इति पठन्ति । यथा वेणीसंहारे—

" नूनं तेनाद्य वीरेण प्रतिज्ञाभङ्गभीरुणा ।
बध्यते केशपाशस्ते स चास्याकर्षणक्षमः ॥ " इति ।

एतच्च ' संरम्भः शक्तिकीर्तनम् ' इत्यनेनैव सङ्गृहीतमिति ।

केचिदन्यतमाङ्गानङ्गीकारेण द्वादशाङ्गमेवैतं सन्धिमिच्छन्ति, एवं गर्भसन्धिमपीति । एतान्यवमर्शसन्धेस्त्रयोदशाङ्गानि ॥ ६० ॥

अथ निर्वहणसन्धेरङ्गानि लक्षयितुमुद्दिशति—

सन्धिर्निरोधो ग्रथनं निर्णयः परिभाषणम् ।
उपास्तिः कृतिरानन्दः समयः परिगूहनम् ॥ ६१ ॥
भाषणं काव्यसंहारः पूर्वभावः प्रशस्तयः ।
चतुर्दशाङ्गो निर्वाहः

१ एकः पुनः खेलकस्त्वयाऽवश्यं प्रेक्षितव्यः ।

विशेषानुपादानात् ;सर्वाण्येवैतानि प्रधानानि ॥ ६१ ॥

अथ सन्धिः—

सन्धिर्बीज–फलागमः ॥ ६२ ॥

मुखसन्धौ न्यस्तस्य प्रारम्भावस्थाविषयीकृतस्य बीजस्योद्घाटोन्मुख्याद्यैर्विकारैः फले फलागमावस्थायामागमनं ढौकनं सन्धिः । यथा रत्नावल्याम्—

" वसुभूतिः—( अग्निविद्रवानन्तरं सागरिकां निर्वर्ण्य ) बाभ्रव्य ! सुसदृशीयं राजपुत्र्याः ।

बाभ्रव्यः—ममाप्येवमेव मनसि । " इति ।

अत्र मुखे यदुप्तं बीजं तन्निकटीभूतमिति । इदमङ्गमवश्यं निबन्धनीयम् ॥६२॥

अथ निरोधः—

निरोधः कार्यमीमांसा

नष्टस्य कार्यस्य, युक्तये यदन्वेषणं तन्निरुद्धवस्तुविषयत्वान्निरोधः । यथा छलितरामे लक्ष्मणेन बद्ध्वाऽऽनीतो लवो यज्ञार्थं सीताप्रतिकृतिमुपकल्पितां रामसदसि दृष्ट्वा स्वगतमाह—

" अये ! कथमियमम्बा राजद्वारमागता ! ( उत्थाय सहसोपगत्याञ्जलिं बद्ध्वा ) अम्ब ! अभिवादये (निरूप्य) कथमियं काञ्चनमयी ! ( अपसृत्योपविशति, सर्वे परस्परमवलोकयन्ति )

रामः—( दृष्ट्वा ) वत्स ! किमियं तव माता ?

लवः—राजन् ! ज्ञायते सैवेयमस्मज्जननी, किन्त्वेषा देवी भूषणोज्ज्वला।

( रामः सबाष्पं हस्ते गृहीत्वा समीपे उपवेशयति )

लक्ष्मणः—( सास्रम् ) आयुष्मन् ! किंनामधेया सा देवानांप्रियस्य जननी ?

लवः—तां खलु मातामहोऽस्माकमभिधत्ते सीतेति ।

लक्ष्मणः—( सबाष्पं रामस्य पादयोर्निपत्य ) आर्य ! दिष्ट्या वर्धसे। सपुत्रा जीवत्यार्या।"

अत्र नष्टस्य सीताजीवनकार्यस्य युक्त्या मीमांसेति ॥

अथ ग्रथनम्—

ग्रथनं कार्यदर्शनम्।

कार्यं मुख्यफलम्। ग्रथ्यते सम्बध्यते व्यापारेण मुख्यफलमनेनेति ग्रथनम्। यथा वेणीसंहारे—

" भीमसेनः—पाञ्चालि ! न खलु मयि जीवति संहर्तव्या दुःशासनविलुलिता वेणिरात्मपाणिना। तिष्ठतु तिष्ठतु स्वयमेवाहं संहरामि।" इति।

अत्र द्रौपदीकेशसंयमनकार्यस्य व्यापारेण ग्रथनमिति ॥

अथ निर्णयः—

निर्णयोऽनुभवख्याति

ज्ञेयेऽर्थे सन्दिहानमप्रतिपद्यमानं वा प्रति यदनुभवस्यानुभूतस्यार्थस्य निर्णयार्थं कथनं त[त्] ज्ञेयार्थनिर्णयान्निर्णयः। यथा यादवाभ्युदये-समुद्रविजयं प्रति वसुदेवः—( सप्रमोदम् ) " देव ! मया कंसप्रतिभयेन कृष्णं गोकुले गोपयता यो महान् क्लेशोऽनुभूतस्तस्य फलमिदानीमभूत्। किन्तु लोकपरिज्ञानभयेन यन्मया देवपादानामपि न विज्ञप्तं तत्र देवेन क्षन्तव्यम्।"

अत्र वसुदेवेन स्वानुभूतं कृष्णगोपनक्लेशं समुद्रविजयो बोधितः।

यथा वा पुष्पदूषितके प्रकरणे–'किन्नामनक्षत्रोऽयं बालकः ?' इति समुद्रदत्तेन पृष्टः सेनापतिः–'विशाखानक्षत्रोऽयं बालकः' इत्याह। समुद्रदत्तः श्रुत्वा पूर्वानुभूतं नन्दयन्तीसमागमं स्मरन्नाह—" तदा किल नन्दयन्त्या पृष्टेन मया कथितं यथा—

एतौ तौ प्रतिदृश्येते चारुचन्द्रसमप्रभौ।
स्यातां कल्याणनामानावुभौ तिष्य(ष्य)-पुनर्वसू॥" इति।

तदाधानाद् दशमं जन्मनक्षत्रमिति ज्योतिःशास्त्रसमयविदो यद् ब्रुवते तदुपपन्नमेव इति ॥

अथ परिभाषा—

परिभाषा स्वनिन्दनम् ॥ ६३ ॥

स्वापराधोद्घट्टनं परिभाषा। यथा तापसवत्सराजे वासवदत्तां प्रति राजा—( सास्रम् ) " देवि ! किं ब्रवीषि ?

यथा तथा धृतप्राणं निःस्नेहं निरपत्रपम् ।
आनन्दामृतवर्षिण्या दृष्ट्वा(ष्ट्याऽ)प्यनुगृहाण माम् ॥ "

यथा वा नलविलासे दमयन्तीं प्रति नलः—

" न प्रेम निहितं चित्ते न चाचारः सतां स्मृतः ।
त्यजता त्वां वने देवि ! मया दारुणमाहितम् ॥ "

यथा वा राघवाभ्युदये रामः—( स्वगतम् )

" वैदेहीं हृतवांस्तदेष महतः सङ्ख्ये विपद्य क्लमां-
श्चक्रोत्पाटितकन्धरो दशमुखः कीनाशदासीकृतः ।
प्राणान् यद्विरहेऽप्यहं विधृतवांस्तेन त्रपापांसुरं
वक्त्रं दर्शयितुं तथापि न पुरस्तस्या विलक्षः क्षमः ॥ "

एषु वत्सराज-नल-रामभद्राणां स्वापराधोद्घट्टनमिति । एतदङ्गं रञ्जकत्वादत्रावश्यं निबन्धनीयम् ।

एके तु ' परिभाषा मिथो जल्पः । ' इति पठन्ति । अत्रापीदमेवोदाहरणमिति ॥ ६३ ॥

अथोपास्तिः—

सेवोपास्तिः

सेवा परप्रसत्तिहेतुर्व्यापारः । यथा वेणीसंहारे—

" भीमः—( द्रौपदीमुपसृत्य ) देवि ! पञ्चालतनये ! दिष्ट्या वर्धसे रिपुकुलक्षयेण । "

अनेन भीमेन द्रौपद्याः प्रसादितत्वात् पर्युपास्तिः ।

यथा वा रघुविलासे—" रामः—( सविनयं सीतां प्रति )

प्राणान् यद्विरहेऽप्यहं विधृतवान् देवि ! प्रियप्राणित-
स्तत् क्षन्तव्यमशेषमेष समयः स्मेराक्षि ! नैव क्रुधाम् ।
सौमित्रेः कपिभर्तुरस्य च मनःप्रीत्यै तदेहि प्रिये !
हस्तिस्कन्धमलङ्कुरुष्व ननु ते पूर्णः प्रतिज्ञाऽवधिः ॥ "

अत्र रामस्य सीताप्रसत्तिहेतुर्व्यापारः ।

अन्ये त्वस्य स्थाने प्रियहिताचरणजनितां प्रसत्तिं प्रसादमङ्गं मन्यन्ते । यथा तापसवत्सराजे गृहीतपञ्चालाधिपतिं रुमण्वन्तं यौगन्धरायणं च प्रति राजा—" साधु सचिवाग्रेसर ! साधु ।

श्लाघ्या धीर्धिषणस्य रावणवशं यातः सुराणां पतिः
सर्वं वेत्त्युशना रसातलमहाकालान्धकारे बलिः ।
इत्यस्माननपेक्ष्य वैरिविजयप्राप्तौजसोः के वयं
स्तोतारः स्वयमेव वेत्तु युवयोर्लोकत्त(स्त)योश्चान्तरम् ॥ "

अत्र वत्सराजस्यामात्याभ्यां प्रियहिताचरणजनिता प्रसत्तिरिति ॥

अथ कृतिः—

कृतिः क्षेमम्

लब्धस्य परिपालनं क्षेमः । यथा रत्नावल्याम्—

" वासवदत्ता— अय्यउत्त ! दूरे से णादिउलं । ता तधा करेसि जधा बंधुअणं न सुमरेदि ।[1] "

अनेन लब्धाया रत्नावल्याः स्थिरीकरणम् ।

अन्ये पुनरस्य स्थाने प्राप्तस्य प्रातिकूल्यशमनं धृतिमाहुः । यथा मुद्राराक्षसे—

---

१ आर्यपुत्र ! दूरेऽस्या ज्ञातिकुलम्, तद् तथा कुर्या यथा बन्धुजनं न स्मरति ।

"चाणक्यः—अमात्य राक्षस ! अपीष्यते चन्दनदासस्य जीवितम् ?

राक्षसः—भो विष्णुगुप्त ! कुतः सन्देहः ?

चाणक्यः—अगृहीतशस्त्रेण भवता नानुगृह्यते वृषल इत्यतः सन्देहः । तद् यदि सत्यमेव चन्दनदासस्य जीवितमिष्यते गृह्यतामिदं शस्त्रम् ।

राक्षसः—विष्णुगुप्त ! मा मैवमयोग्या वयमस्य, विशेषतस्त्वया गृहीतस्य ग्रहणे ।

पुनर्बहु प्रशस्य राक्षसं चाणक्य आह—किमनेन ? भवतः शस्त्रग्रहणमन्तरेण न चन्दनदासस्य जीवितमस्ति ।

राक्षसः—नमः सर्वकार्यप्रतिपत्तिहेतवे सुहृत्स्नेहाय । का गतिरेष गृह्णामि ।"

एतद्ध्वस्य राक्षसस्य साचिव्यग्रहणचामरप्रशमनाद् द्युतिः ।

अपरे तु क्रोधादेः प्रशान्तस्य शमनं द्युतिमामनन्ति । यथा वेणीसंहारे—

" भीमसेनः—राजपुत्रि ! अलं मामेवमवलोक्य त्रासेन ।

कृष्टा येनासि राज्ञां सदसि नृपशुना तेन दुःशासनेन
स्त्यानान्येतानि तस्य स्पृश मम करयोः पीतशेषाण्यसृञ्जि ।
कान्ते ! राज्ञः कुरूणामतिसरसमिदं मद्गदाचूर्णितोरो—
रङ्गेऽङ्गेऽसृग् निषिक्तं तव परिभवजस्यानलस्यास्तु शान्त्यै ॥"

अत्र भीम-द्रौपद्योः क्रोधोपशमः ।

तथा रत्नावल्याम्—

" देव ! श्रूयताम् । इयं हि सिंहलेश्वरदुहिता सिद्धेनादिष्टा । योऽस्याः पाणिं ग्रहीष्यति स सार्वभौमो राजा( आ ) भविष्यति ।" इत्यादेरारभ्य " परिज्ञातायाः स्वभगिन्याः सम्प्रतिकरणीये देवी प्रमाणम् ।" इति यावत् ।

अनेन स्वाजन्यावगमात् वासवदत्तायाः सागरिकां प्रतीर्ष्या-कोपस्य शमनमिति ॥

अथानन्दः—

आनन्दो वाञ्छितागमः ।

प्रकारशतैर्वाञ्छितस्यार्थितस्य सामस्त्येन आगमः प्राप्तिरानन्दहेतुत्वादानन्दः । यथा रत्नावल्याम्—

" वासवदत्ता—( राजानमुपेत्य ) अज्जउत्त[1] ! पडिच्छ एदं ।

राजा—( हस्तौ प्रसार्य ) को देव्याः प्रसादं न बहु मन्यते ?

विदूषकः—ही[2] ही ! भो ! जयदु भवं । णं पुहवी इदार्णि हत्थे भूद व्येव पियवयस्सस्स । " इति ॥

अथ समयः—

समयो दुःखनिर्वासः

दुःखनिर्गमयुक्तः कालः समयः । यथा मृच्छकट्यां चारुदत्तं पालकस्य राज्ञ आज्ञया वध्यत्वेन चाण्डालगोचरगतं तत्क्षणप्राप्तराज्यस्यार्यकस्याज्ञया शार्वलिक आह—" अपयातापयात जाल्माः ! ( दृष्ट्वा सहर्षम् ) ध्रियते चारुदत्तः सह वसन्तसेनया । सम्पूर्णाः खल्वस्मत्स्वामिनो मनोरथाः ।

दिष्ट्या भो ! व्यसनमहार्णवादगाधा-
दुत्तीर्णं गुणवृतया सुशीलवत्या ।
त्वामेव प्रियतमया युतं समीक्षे
ज्योत्स्नाऽऽढ्यं शशिनमिवोपरागमुक्तम् ॥ "

अत्र चारुदत्तस्य दुःखापगम इति ॥

अथ परिगूहनम्—

अद्भुतात्तिः परिगूहनम् ॥ ६४ ॥

विस्मय-स्थायिभावात्मकस्याद्भुतरसस्य प्राप्तिरुपगूहनम् । यथा रामाभ्युदये रामेण प्रत्याख्याता सीता ज्वलनं प्रविष्टा । तदनन्तरं नेपथ्ये कलकलः—

" धूमव्रातं वितानीकृतमुपरिशिखादोर्भिरभ्रंलिहाग्रै-
र्बिभ्रद् भ्राजिष्णु रत्नं वतमुरसि तथा चर्म चामूरवं च ।

१ आर्यपुत्र ! प्रतीच्छैताम् । २ ही ही भोः ! जयतु भवान् । ननु पृथ्वीदानीं हस्ते भूतैव प्रियवयस्यस्य ।

भूयस्तेजःप्रतानैर्विरहमलिनतां क्षालयन्नङ्गमाजो
देव्याः सप्तार्चिराविर्भवति विफलयन् वाञ्छितान्यन्तकस्य ॥

ततः प्रविशति पटाक्षेपेण सीतामादाय वह्निः। सर्वे दृष्ट्वा ससम्भ्रम-मुत्थाय–'आश्चर्यमाश्चर्यं नमो भगवते हुताशनाय' इति प्रणमन्ति। ”

अत्राग्निप्रविष्टसीताप्रत्युज्जीवनादद्भुतप्राप्तिः।

यथा वा रघुविलासे—

“ मध्येऽम्भोधि बभूव विंशतिभुजं रक्षो दशास्यं पुन–
स्तत् पाताल–मही–त्रिविष्टपमदाश्चक्राम दोर्विक्रमैः।
मर्त्यस्तस्य पुनर्मृणालतुलया चिच्छेद कण्ठाटवीं
वैराग्यस्य च विस्मयस्य च पदं रामायणं वर्तते ॥ ”

पुष्पदूषितके तु निर्णयवर्जितानि सन्ध्यादीन्यङ्गानि परिगृहनान्ता-न्येकस्मिन्नेव श्लोके दृश्यन्ते। तथाहि—

“ समुद्रदत्तः—स्वमोऽयम्।

सेनापतिः—न हि।

समुद्रदत्तः—विभ्रमो नु मनसः। सन्धिः १।

‘ सेनापतिः—शान्तम्।

समुद्रदत्तः—तदेषा त्रपा।’ निरोधः २।

‘ सेनापतिः—जाया ते।’ ग्रथनम् ३।

‘ समुद्रदत्तः—कथमङ्कबालतनया ’। परिभाषणम् ४।

‘ सेनापतिः—पुत्रस्तवायम्।

समुद्रदत्तः—मृषा।’ द्युतिः ५।

‘ सेनापतिः—आलम्ब्याय न एष वेत्ति नियतं सम्बन्धमेतद्युगवम्।’ प्रसादः ६।

'समुद्रदत्तः—केनैतद् घटितं विसन्धि ?।' आनन्दः ७ ।

'सेनापतिः—विधिना ।' समयः ८ ।

'समुद्रदत्तः—(सुवरूपं दृष्ट्वा) सर्वं समायुज्यते ।" परिगूहनमिति ९ ॥ ६४ ॥

अथ भाषणम्—

भाषणं साम–दानोक्तिः

साम्नो वचनं ददतश्च वचनम् । आम्यासुपलक्षणपरत्वात् प्रियं हितं च गृह्यते । यथा मृच्छकट्याम्–आर्यकराजाज्ञया शार्वलिकश्चारुदत्तमाह—

" त्वद्यानं यः समारुह्य गतस्ते शरणं पुरा ।
पशुवद् वितते यज्ञे हतस्तेनाद्य प[ा]लकः ॥

चारुदत्तः—शार्वलिक ! किं योऽसौ राज्ञा वा(पा)लकेन घोषादानीय निष्कारणं कूटागारे बन्धने बद्ध आर्यकनामा त्वया मोचितः ?

शार्वलिकः—सत्यम् । सिंहासनाधिरोहे अनुष्ठितमात्रे च तेन तव सुहृदा राज्ञा आर्यकेणोज्जयिन्यां च वेलातटे तुभ्यं राज्यमतिसृष्टम् । तत् प्रतिमान्यतां प्रथमः सुहृत्प्रणयः । (पुनर्वसन्तसेनामाह–) आर्ये वसन्तसेने ! राजा तवोपरि तुष्टो भवतीं वधूशब्देनानुगृह्णाति ।

वसन्तसेना—अज्ज सव्वलिय ! कयत्थ म्हि ।

(पुनश्चारुदत्तमाह—) आर्य ! किमस्य भिक्षोः क्रियताम् ?

चारुदत्तः—भिक्षो ! किं तव बहु मतम् ?

भिक्षुः—अणिच्चत्तणं पेक्खिअ पव्वज्जा(ज्जा)बहुमाणे संवुत्ते ।

चारुदत्तः—सखे ! दृढोऽस्य निश्चयः । तत् पृथिव्यां सर्वविहारेषु कुलपतिः क्रियताम् ।

शार्वलिकः—एवमेतत् ।

---

१ आर्य सार्वलिक । कृतार्थाऽस्मि । २ अनित्यत्वं प्रेक्ष्य प्रव्रज्याबहुमानः संवृत्तः ।

चारुदत्तः—प्रियं नः।

वसन्तसेना—संपदं जीविद म्हि।

शार्वलिकः—स्थावरकस्य किं क्रियताम्?

चारुदत्तः—सुभृत्योऽयमदासोऽस्तु।

शार्वलिकः—एवं यथाऽऽहार्यः।"

अत्र साम्ना दानेनान्यैश्च प्रियहितैरुक्तिः। अनयोः पृथगप्युक्तिर्निबध्यत एव। इदमप्यङ्गमवश्यं निबन्धनीयमेवेति॥

अथ पूर्वभावः—

प्राग्भावः कृत्यदर्शनम्।

यथा रत्नावल्याम्—

"यौगन्धरायणः—एवं विज्ञाय भगिन्याः सम्प्रतिकरणीये देवी प्रमाणम्।

वासवदत्ता—फुडं य्येव किन्न भणासि पडिवाहेदि (एहि) से रयणमालं ति।"

अत्र 'वत्सराजाय रत्नावली दीयताम्' इति कार्यस्य यौगन्धरायणाभिप्रायानुप्रविष्टस्य वासवदत्तया दर्शनम्।

यथा वा यादवाभ्युदये—

"युधिष्ठिरः—देव! कृष्णोऽयं भरतार्धचक्रवर्ती नवमो वासुदेव इति मुनयः शंसन्ति।

समुद्रविजयः—जाने भरतार्धराज्ये कृष्णमभिषेक्तुं मामुत्साहयति महाराजः।

युधिष्ठिरः—एतदेव देवस्य जरासन्धवधप्रयासफलम्।" इति।

अत्र युधिष्ठिराभिमतं कृष्णराज्याभिषेककार्यं समुद्रविजयेन दर्शितम्।

१ साम्प्रतं जीवितास्मि। २ स्फुटमेव किं न भणसि प्रतिपादयास्मै रत्नमाला(रत्नावली)मिति।

मुखसन्ध्याद्युक्तवाक्यसदृशवाक्यदर्शनं पूर्ववाक्यमङ्गमस्य स्थाने केचि-दामनन्ति । यथा मुद्राराक्षसे—

" चाणक्यः—( पुरुषं प्रति ) इदं च वक्तव्यो विजयो दुर्गपालः । अमात्यराक्षसदर्शनप्रीतो देवश्चन्द्रगुप्तः समाज्ञापयति । विना हस्तिभ्यः क्रियतां सर्वबन्धनमोक्ष इति । अथवा अमात्यराक्षसे नेतरि किं हस्तिभिः प्रयोजनम् ?

विना वाहन-पोताभ्यां मुच्यतां सर्वबन्धनम् ।
पूर्णप्रतिज्ञेन मया केवलं बध्यते शिखा ॥"

अत्र मुखे यदुपक्षिप्तम्—'बध्यः को नेच्छति शिखां मे' इति तदेव भ-ङ्ग्यन्तरेणोपन्यस्तमिति । उद्देशोक्तसंज्ञातः संज्ञान्तरेण यल्लक्षणविधानं सर्वत्र तत् छन्दोऽनुरोधादिति ॥

अथ काव्यसंहारः—

[ वरेच्छा काव्यसंहारः ]

ईप्सितं दातुमभिलापो वरेच्छा । तज्जनितो 'भूयः किं ते प्रियमुपकरोमि' इति प्रश्न इत्यर्थः । स च गृहीतवरप्रतीच्छति प्रतीच्छति च सम्पादयितुर्भूयसी-मिच्छां दर्शयितुं निबध्यते । तत्र सति सर्वस्मिन्नेवेप्सिते सम्पन्ने प्रस्तुतं काव्यमेव संह्रियत इति काव्यसंहारः ।

यथा कृत्यारावणे सीतारक्षणे रामस्य प्रिये हिते च महति कर्मणि कृतेऽप्यसन्तुष्यन्नग्निराह—'वत्स ! उच्यतां किं ते भूयः प्रियमनुकरोमि' इति ।

"रामः—भगवन्नतः परमपि प्रियमस्ति ? " इति ।

यथा च पाण्डवाभ्युदये—

" युधिष्ठिरः—देव ! किमतः परं प्रार्थ्यते यदूनाम् ?

समुद्रविजयः—( साश्चर्यम् ) किमतः परमपि प्रार्थनीयमस्ति ?

त्रातो घोषभुवां विधूत्य मधुजित् कंसः क्षयं लम्भितः
सम्प्रत्येव विनिर्मितं मगधभूभर्तुः कबन्धं वपुः ।

पादाक्रान्तमजातशत्रुभरतं तद् ब्रूहि नः किं परं ?
श्रेयोऽस्मादपि पाण्डवेश ! पुन[र]प्याशास्महे यद् वयम् ॥ "

अनयोरप्रतिगृहीते वरे काव्यसंहारः ।

तथा इन्दुलेखायां नाटिकायां राज्ञी नायिकामिन्दुलेखामाह— " [1]ईदिसीए तुह इमाए कुलाणुसरिसीए सीलसंपण्णाए संमुहीकदस्स मे हिदयस्स उववन्नो य्येव समुचिदाए पडिवत्तीए अयं अवसरो ता मम य्येव पियं करिंती वरेसु जं वे समीहिदं ।

नायिका—[2]ईदिसस्स देवीपसायस्स न दाव अधियं सरिसं किं पि भविस्सदि जं वरइस्सं । तधा वि को देवीए पसादाणं पज्जत्तकामो ? ता पियदंसणं मे पसादीकरेदु देवी ।

राज्ञी—[3]बाढं पडिवादिदा ।

नायिका—[4]महंतो पसादो ( स्वगतम् ) संपदं पमज्जिय भुजिस्सभावं पियदंसणाए इच्छा-गुरूव-नेहस्स अणुसरिसं ववहरिस्सं । "

अत्र वरस्य प्रतिग्रह इति ।

इदमङ्गमवश्यं निबन्धनीयं प्रशस्तिनान्तरी[य]कत्वादिति ॥

अथ प्रशस्तिः —

प्रशस्तिः शुभशंसना ॥ ६९ ॥

जगतः कल्याणाशंसना प्रशस्तिः । तच्च नायकस्तदन्यो वा पठति । यथा कृत्यारावणे " रामः—तथापीदमस्तु—

---

१ ईदृश्या तवानया कुलानुसदृश्या शीलसम्पन्नया सम्मुखीकृतस्य मे हृदयस्योपपन्न एव समुचितया प्रतिपत्त्याऽयमवसरस्तत् ममैव प्रियं कुर्वन्ती वृणुष्व यत् ते समीहितम् ।

२ ईदृशस्य देवीप्रसादस्य न तावदधिकं सदृशं किमपि भविष्यति यद् वरिष्यामि । तथापि को देव्याः प्रसादानां पर्याप्तकामः ?, तत् प्रियदर्शनां मे प्रसादीकरोतु देवी ।

३ बाढं प्रतिपादिता । ४ महान् प्रसादः । साम्प्रतं प्रमार्ज्य भुजिष्यभावं प्रियदर्शनाया इच्छा-गौरव-स्नेहस्यानुसदृशं व्यवहरिष्ये ।

यथाऽयं मम सम्पूर्णश्चिन्तितार्थो मनोरथः ।
एवमभ्यागतो रङ्गः सर्वपापैः प्रमुच्यताम् ॥

अपि च—

निरीतयः प्रजाः सन्तु सन्तः सन्तु चिरायुषः ।
प्रथन्तां कवयः काव्यैः सम्यग् नन्दन्तु मातरः ॥"

यथा वा यादवाभ्युदये "युधिष्ठिरः—तथापि किमपि ब्रूमो वयम्—

कल्याणं भूर्भुवःस्व[ः] प्रसरतु विपदः प्रक्षयं यान्तु सर्वाः
सन्तः श्लाघां भजन्तामपचयमयतां दुर्मतिर्दुर्जनानाम् ।
धर्मः पुष्णातु वृद्धिं सकलयदुमनःकैरवारामचन्द्रः
प्राप्य स्वातन्त्र्यलक्ष्मी(क्ष्मीं) मुदमथ वहतां शाश्वतीं यादवेन्द्रः ॥"

इयं चावश्यं निबन्धनीया। तथेतिवृत्तान्तर्भूता चेयम्, तेनास्याः प्र(पृ)थगगणने चतुःषष्टिरप्यङ्गसङ्ख्या भवति। सन्धि–निरोध–ग्रथन–पूर्वभाव–काव्यसंहार–प्रशस्तिभ्योऽन्याङ्गानां शेषसन्धिष्वपि कार्यवशतो निबन्धः । अत्रापि च स्वेच्छया नियोगः । एतानि निर्वहणसन्धेश्चतुर्दशाङ्गानि । सर्वसन्धीनां चाङ्गानीतिवृत्ताविच्छेदार्थमुपादीयन्ते । इतिवृत्तस्याविच्छेदश्च रसपुष्ट्यर्थः, विच्छेदे हि स्थाय्यादेस्त्रुटितत्वात् कुतस्त्यो रसास्वादः ? ततो रसविधानैकतानचेतसः कवेः प्रयत्नान्तरानपेक्षं यदङ्गमुज्जृम्भते तदेवोपनिबद्धं सहृदयानां हृदयमानन्दयति । अङ्गानि च स्थायि–विभावानुभाव–व्यभिचारिरूपाणि द्रष्टव्यानि । अमीषां च स्वसन्धौ सन्ध्यन्तरे च योग्यतया निबन्धः । योग्यतां च रसनिवेशैकव्यसनायिनः प्रबन्धकवयो विदन्ति, न पुनः शब्दार्थग्रथनवैचित्र्यमात्रोन्मदिष्णवो मुक्तककवयः । तेनैकमप्यङ्गं रसपोषकत्वादेकस्मिन्नपि सन्धौ द्विस्त्रिर्वा निबध्यते । यथा वेणीसंहारे सम्फेट–विद्रवौ पुनः पुनर्दर्शितौ वीर–रौद्ररसावुद्दीपयतः । रत्नावल्यां च विलासः पुनः पुनरुक्तः शृङ्गारमुल्लासयति । अतः परमपि निबन्धस्तु वैरस्यमावहतीति। तथाङ्गद्वयेन साध्य(ध्यं?) यदेकेनैव सिध्यति तदेकमेव निबध्यते। यथा श्रीभीमदेवसूनोर्वसुनागस्य कृतौ प्रतिमानु(नि)रुद्धे परिकरार्थस्यो-

पक्षेपेणैव गतत्वान्न तन्निबन्धः। एवमङ्गत्रयेणापि। यथा भेज्जलविरचिते राधाविप्रलम्भे रासकाङ्के परिकर-परिन्यासयोरुपक्षेपेणैव गतत्वान्न तन्निबन्धः। एवं परस्परान्तर्भावे चतुरङ्गोऽपि क्वापि सन्धिर्भवति।

अत्रान्तरे च केचिदेकविंशतिः(तिं) सन्ध्यन्तराणि स्मरन्ति—

" साम भेदस्तथा दण्डो दानं च वध एव च।
प्रत्युत्पन्नमतित्वं च गोत्रस्खलितमेव च॥
साहसं च भयं चैवं ह्री(धी)र्माया क्रोध एव च।
उ(ओ)जः संवरणं भ्रान्तिस्तथा हेत्ववधारणम्॥
दूतो लेखस्तथा स्वप्नश्चित्रं मद इति स्मृतः।" इति।

एषु च केषांचित् सामादीनां स्वयमङ्गरूपत्वात् केषांचिन्मत्यादीनां व्यभिचारिरूपत्वात् दूत-लेखादीनामितिवृत्तरूपत्वादन्येषामुपक्षेपाद्यन्तर्भावाच्च न पृथक् लक्षणः(णे) प्रयासः। तथाहि गर्भसन्धौ साम-दानादिरूपसङ्ग्रहोऽङ्गम्। मत्यादयो व्यभिचारिषु लक्षयिष्यन्ते। दूत-लेखादीनामितिवृत्तरूपता दृश्यते। तथोदात्तराघवे हेत्ववधारणात्मा उपक्षेपः। प्रतिमानिरुद्धे स्वप्नरूपः। रामाभ्युदये भयात्मा। वेणीसंहारे क्रोधात्मा। एवमन्येष्वप्यङ्गेष्वन्तर्भावः कीर्तनीय इति॥ ६५॥

इति रामचन्द्र-गुणचन्द्रविरचितायां स्वोपज्ञनाट्यदर्पणविवृतौ नाटकनिर्णयः प्रथमो विवेकः॥ १॥

# अथ द्वितीयो विवेकः ।

---

अथ 'नाटकं प्रकरणं च' इत्यतो नाटक लक्षयित्वा प्रकरणं लक्ष्यते—

प्रकरण वणिग्–विप्र–सचिव–स्वाम्यसङ्करात् ।
मन्दगोत्राङ्गन दिव्यानाश्रित मध्यचेष्टितम् ॥ ६६ ॥
दास–श्रेष्ठि–विटैर्युक्तं क्लेशाढ्यं तच्च सप्तधा ।
कल्प्येन(त) फल–वस्तूनामेक–द्वि–त्रिविधानत ॥ ६७ ॥

प्रकर्षेण क्रियते कल्प्यते नेता फलं वस्तु वा व्यस्त–समस्ततयाऽत्रेति प्रकरणं प्रसिद्धत्वात् लक्ष्यमनूद्य लक्षणं विधीयते। वणिजः क्रय–विक्रयकृतः। विप्राः षट्कर्माणः। सचिवो राज्यचिन्तकः। अयं वणिग्–विप्रयोर्मध्यपात्यपि धीरोदात्त–धीरप्रशान्तौ प्रकरणे नेतारौ भवतः [इति प्रतिपादनार्थं पृथगुपात्तः] यस्त्वमात्यं नेतारमभ्युपगम्य धीरप्रशान्तनायकामिति प्रकरणं विशेषयति स वृद्धसम्प्रदाय–वन्ध्यः। यदाहुः—'सेनापतिरमात्यश्च धीरोदात्तौ प्रकीर्तितौ' इति। असङ्करादिति व्यक्तिभेदेन वणिगादयो नेतारः, न पुनरेकस्यामेव प्रकरणव्यक्तौ समवकारादिवत् त्रयोऽपि। मन्दगोत्रा मन्दकुलाऽङ्गना नायिका यत्र। यद्वा मन्दा मन्दवृत्ता रो(गो)त्राङ्गना यत्र। अत एवात्र नायिकौचित्येन नायकोऽपि मन्दगोत्र एव। एवं च पुष्पदूषितकेऽशोकदत्तादिशब्दाकर्णनेन समुद्रदत्तस्य नन्दयन्त्यां या व्यलीकशङ्कोपनिबद्धा सा न दोषाय। परपुरुषसम्भावनाया निर्वहणं यावदत्रोपयोगित्वात्। अपरथोत्तमप्रकृतीनां स्वसु(श्वशु)रेण वध्वा[:] पुत्रे दूरस्थिते निर्वासनं निर्वासितायाश्च शबरसेनापतिगृहेऽवस्थानमनुचितमेव। उत्तमप्रकृतीनां राज्ञां तु कुलस्त्रियां व्यलीकसम्भावना दुर्योधनस्येव भानुमत्यामनुचितैव। वणिगमात्य–विप्राश्च स्ववर्गापेक्षयैवोत्तमाः, न राजापेक्षया। एतदर्थमेव च मन्दशब्देन गोत्रं विशेषितम्। प्रकरणे हि नायको व्युत्पाद्यश्च मध्यमप्रकृतिरेव। 'दिव्यानाश्रितम्' इति दिव्यैरनाश्रितम्। नाटके ह्यङ्गत्वेन दिव्यो भवति, प्रकरणे तु तथाभावोऽपि नेष्टः। तस्य सुखबाहुल्येनाल्पदुःखत्वाद्, अपरथा दिव्यत्वमेव हीयते।

मध्यं सर्वोत्तम-हीनप्रकृत्ययोग्यं चेष्टितं विहार-व्याहार-वेष-सम्भोगादिको व्यापारो यत्र। तेन कल्पितवृत्तत्वेऽप्यस्य न राजोचितोऽन्तःपुरादिसम्भोगः, कञ्चुकीप्रभृतिभृत्यवर्गो वा न चाधमपात्रसम्भोगादिर्वा निबन्धनीयः। तथा च वेश्यायां नायिकायां विनयरहितमपि चेष्टितं निबध्यते। यथा विशाखदेवकृते देवीचन्द्रगुप्ते माधवसेनां समुद्दिश्य कुमारचन्द्रगुप्तस्योक्तिः—

" आनन्दाश्रुजलं सितोत्पलरुचोराबध्नता नेत्रयोः
प्रत्यङ्गेषु वरानने ! पुलकिषु स्वेदं समातन्वता।
कुर्वाणेन नितम्बयोरुपचयं सम्पूर्णयोरप्यसौ
केनाप्यस्पृशताऽप्यधोनिवसनग्रन्थिस्तवोच्छ्वासितः॥" इति।

व्युत्पाद्योऽपि च प्रकरणे मध्यमप्रकृतिरेव, नेतृचरितस्यापि तथाभूतत्वादिति। 'दास-श्रेष्ठि-विटैर्युक्तम्' इति। दासो जीविताावधि वेतनक्रीतो बाल्यात् प्रभृति पोषितो वा। श्रेष्ठी वणिक्प्रधानम्। विटो धूर्तः। तत्र कञ्चुकिस्थाने दासः। अमात्यस्थाने श्रेष्ठी। विदूषकस्थाने विटः। उपलक्षणं चैतत्, तेनापरमपि चाटुकार-सहायादिकं वणिपार्श्वविधे(गार्श्वौचित्ये)न निबन्धनीयम्। 'क्लेशाढ्य(ढ्य)म्' इति। दुःखदीप्तम्, अपायशतान्तरितफलत्वादिति एतावद्[ल्ल]क्षणम्। तच्चेति उक्तलक्षणं प्रकरणं सप्तभेदम्। इनो नायकः। फलं मुख्यसाध्यम्। वस्तुफलसाधका उपायाः। एतेषामेक-द्वि-त्रिविधानेन सप्तभेदं प्रकरणम्। तत्र नेतुः प्रकल्पने तदितरयोश्चाकल्पने एको भङ्गः। एवं फल-वस्तुनोरपि। एवमेककल्पविधाने त्रयो भङ्गाः। तथा नायक-फलयोर्नायक-वस्तुनोः फल-वस्तुनोर्वा कल्पने शेषस्यैकस्य चाकल्पने त्रयो द्विकभङ्गकाः। नायक-फल-वस्तूनां त्रयाणां समुदितानामपि कल्पने एको भङ्गः। एवं सर्वमीलनेन सप्तधा प्रकरणमिति॥ ६६-६७॥

अथ नायिकायोगद्वारेण भेदसङ्ख्यात(न)मप्याह—

कुलस्त्री गृहवार्तार्था पण्यस्त्री तु विपर्यये।
विटे पत्यौ द्वय तस्मादेकविंशतिधाऽप्यद ॥ ६८ ॥

गृहवार्तायां गार्हस्थ्योचितपुरुषार्थसाधके वृत्ते कुलजैव स्त्री नायिकात्वेन वणिगादीनां निबन्धनीया यथा पुष्पदूषितके । विपर्यये तु गार्हस्थ्यधर्मोचितपुरुषार्थावर्णने वेश्यैव नायिकात्वेन निबन्धनीया यथा तरङ्गदत्ते । उभययोगस्य विट एव विधानादनयोरप्यवधारणम् । विटे गीत–नृत्य–वाद्यविचक्षणे द्यूत–पान–वेश्याऽऽदिषु प्रसक्ते कलाकुशले मूलदेवादौ पत्यौ नायकत्वेन विवक्ष( क्षि )ते । कुलस्त्री चेति द्वयं तदुचितगार्हस्थ्यपुरुषार्थापेक्षया निबन्धनीयम् । अस्य तु विटत्वादेव पण्यस्त्री प्रधानम् । कुलस्त्री तु पितृ–पितामहाद्यनुरोधाद् गुणः(गौणम्) । विटस्य पतित्वानुवादाद् वणिगाद्यनन्तर्भूतोऽपि प्रकरणे विटो नेता लभ्यते । वेश्या–कुलजाभ्यां सङ्कीर्णत्वादयं भेदोऽशुद्धः । पूर्वौ तु शुद्धौ स्त्रीसङ्कराभावात् । शुद्धभेदयोरपि विटः ससहाय एकः । सङ्कीर्णे तु बहवः । केचित् तु वणिग्नेतृकमपि धूर्तसङ्कुलत्वान्मृच्छकटिकाऽऽदिकं सङ्कीर्णं मन्यन्ते । एषु च भेदेषु नायकवृत्तानुरूप एव व्युत्पाद्यः । अत्र हि वणिगमात्य–विप्राद्युचिता त्रिवर्गप्राप्तिस्तदर्जने स्थैर्य–धैर्यादि, व्यापदि मूढता, कुलस्त्रीवृत्तं वेश्यासुसम्भोगचातुर्यं विट–दूतयोः स्वरूपं नायिकाया रागापरागलिङ्गानि हृदयग्रहणप्रयोगश्च नायकयोरपरागकारणानि चतुरोत्तममध्यमप्रकृतेर्नायकस्योत्तम–मध्यमाधमप्रकृतेर्नायिकायाश्च स्वरूपं सामाद्युपायप्रयोगश्च व्युत्पाद्यानामुपदिश्यते ' तस्मादिति ' यतः शुद्धसङ्कीर्णभेदत्रयरूपं सप्तभेदं प्रकरणम्, तस्मादेकविंशतिधाऽप्यद एतत् प्रकरणम् । चतुर्दश शुद्धाः, सप्त सङ्कीर्णाः प्रकरणभेदाः । नायिकायाः कल्पिताकल्पितत्वेऽन्येऽपि भेदाः सम्भवन्ति, परमदृष्टत्वादुपेक्षिताः ॥ ६८ ॥

अथाकल्प( ल्प्य )स्वरूपं निरूपयति—

अत्राकल्प्यं पुरा क्लृप्तं यद्वाऽनार्षमसद् गुणम् ।

अत्र प्रकरणेऽकल्प्यमनुत्पाद्यं यत् तत् पूर्वकविकृतकाव्यादौ क्लृप्तं सत् समुद्रदत्तचेष्टितादिवद् ग्राह्यम् । अथवा यदत्राकल्प्यं तत् पूर्वर्षिप्रणीतशास्त्रव्यतिरिक्तबृहत्कथाऽऽद्युपनिबद्धं मूलदेवचरितादिवदुपादेयम् । ' असद्गुणम् ' इति । यदत्राकल्प्यं पूर्वकविकल्पितं बृहत्कथाऽऽद्युपनिबद्धं वा चरितमपि तदसद्गुणम् । पूर्वकविकाव्ये बृहत्कथाऽऽदौ चासन्तो गुणा रसपुष्टिहेतवो

भणितिविशेषादयो यत्र। यदप्यत्र प्राक्तनं निबध्यते, तत्रापि कविना रसपुष्टिहेतुरधिकावापो विधेय इत्यर्थः। अत एवार्षस्य वर्जनम्। तत्र ह्यभूतगुणाचापे श्राद्धलोकस्य जुगुप्सा स्यादिति॥

अपवादभूतं कृत्यमुक्त्वोत्सर्गमतिदिशति—

शेषं नाटकवत् सर्वे कैशिकीपूर्णतां विना॥ ६९॥

उक्ताद् वणिग्–विप्र–सचिव-स्वाम्यादिकाल्लक्षणाच्छेषमपरमभिनेयप्रबन्धोचितं फलाङ्कोपाय-दशा-सन्धि-सन्ध्यङ्ग-प्रवेश–विष्कम्भकाङ्कावताराङ्कमुख–चूलिका-वृत्तिभेद-रसादिकं यथा नाटके लक्षितं तथाऽत्रापि सर्वमौचित्यानतिक्रमेणायोज्यम्। वृत्तिचतुष्टयस्यातिदेशेऽपि कैशिकीबाहुल्यं न निबन्धनीयम्। *क्लेशप्राचुर्येण शृङ्गार-हास्ययोरल्पत्वात्। यथा मृच्छकटी–पुष्पदूषितक*–तरङ्गदत्तादिषु। यत्पुनर्भवभूतिना मालतीमाधवे कैशिकीबाहुल्यमुपनिबद्धम्, तत्र(त्र) वृद्धाभिप्रायमनुरुणद्धीति। तदयं सङ्क्षेपो यस्य पूर्वप्रसिद्ध एवार्थे कुतूहलमसौ मुनिप्रणीतशास्त्रप्रसिद्धचरितेन नाटकेन राजादिरुत्तमप्रकृतिर्ह्लादपाद्यते, यस्य पुनरुत्पाद्येऽर्थे कुतूहलमसौ वणिगादिर्मध्यमप्रकृतिः प्रकरणेन। दुर्मेधसा(सां) हि न्याय्ये वर्त्मनि प्रवृत्यर्थं कवयोऽभिनेयप्रबन्धान् ग्रथ्नन्तीति॥ ६९॥

अथ प्रकरणानन्तरोद्दिष्टां नाटिकां लक्षयितुमाह—

चतुरङ्का बहुस्त्रीका नृपेशा स्त्री–महीफला।
कल्प्यार्या कैशिकीमुख्या पूर्वरूपद्वयोत्थिता॥ ७०॥
अख्याति–ख्यातितः कन्या–देव्योर्नाटी चतुर्विधा।

'चतुरङ्केति' अवस्थात्रयसमाप्तिपरिच्छिन्नास्त्रयोऽङ्काः कस्याश्चिदवस्थायाः प्रभूतरसेऽवस्थान्तरे समावेशेन युगपदवस्थाद्वयसमाप्त्याऽङ्कविच्छेदे चत्वारोऽङ्काः। अल्पं हि वृत्तं नाटिकायामतो वृत्तसङ्क्षेपार्थमवस्थायाः समावेशः। बहुस्त्रीकता च कैशिकीमुख्यत्वेन शृङ्गाररसबाहुल्यात्। अत एव ललिताभिनयात्मिकाः स्त्रियश्च देवी–दूती–सखी–चेटी–कन्यकाऽऽदयः। नृपः कैशिकीप्रधानत्वा[द्] धीरललितो राजा ईशो नेता यस्याम्। अत एवात्र प्रकरणोद्भवत्वेऽपि सर्वो राजोचितो व्यवहारः, नायकानुसारित्वात् सर्वेभ्य-

वहारस्य। 'स्त्री–महीफला' इति स्त्रीलाभपुरःसरराज्यप्राप्तिफला। 'कल्प्यार्था' इति कर्म-करणव्युत्पत्तिभ्यामर्थ[ः] फलमुपायाश्च। तेन द्वावप्यत्रोत्पाद्यौ। कैशिकी वक्ष्यमाणलक्षणा सा मुख्या प्रधानं यस्यां मुख्यत्वं च शेषवृत्त्यपेक्षया बाहुल्यम्। तत एव गीत–नृत्त–वाद्य–हास्यादीनां शृङ्गाराङ्गानां प्राचुर्यम्। पूर्वरूपद्वयं नाटकं प्रकरण च तस्मादुत्थितमुत्थानं यस्यां कैशिकीप्राधान्याच्च यत् स्त्रीप्रायं कामफलं नाटकं प्रकरणं च किञ्चित् तदिह ग्राह्यम्। अन्येषामनुरूपत्वाभावात्। एतद्द्वयोत्थितत्वेन चावस्था-सन्धि–सन्ध्यङ्ग-बीज-बिन्दु-पताका–प्रकरी–पताकास्थानकाङ्कप्रवेशक–विष्कम्भकेतिवृत्तभेदादीन्युभयभेदसाधारणानि लभ्यन्ते। तत्र 'नृपेशा' इति नाटकधर्मस्तत एव नायकोऽकल्पितः 'कल्प्यार्था' इति प्रकरणधर्मः। एतावल्लक्षणम् ॥७०॥ 'अख्याति-ख्यातितः' इति। इह नाटिकायां नायिकाया द्वयं कन्या देवी च युगपत्। अपरिणीता कन्या। अन्तःपुरसङ्गीतकभेदभिन्ना परिणीता तु देवी। तयोः प्रत्येकं प्रसिद्ध्यप्रसिद्धिभ्यां चतुर्भेदत्वान्नाटिकाऽपि चतुर्विधा। तत्र देव्यप(प्र)सिद्धा, कन्या प्रसिद्धेत्येकः। देव्यप्रसिद्धा, कन्याऽप्यप्रसिद्धेति द्वितीयः। देवी प्रसिद्धा, कन्या त्वप्रसिद्धेति तृतीयः। देवी प्रसिद्धा कन्याऽपि प्रसिद्धेति चतुर्थः। उभयोः प्रसिद्धत्वेऽपि च कल्पितार्थत्वं नाटिकायाः, अन्यथा संविधानकरचनात्। नाटयति नर्तयति व्युत्पाद्यमनांसीत्यचि गौरादेराकृतिगणत्वाच्च ङ्यां नाटी। अल्पवृत्तत्वादल्पार्थे कपि नाटिकेत्यपीति। स्त्रीप्रधानत्वात् सुकुमारातिन(श)यत्वाच स्त्रीलिङ्गसंज्ञानिर्देशः। एवं प्रकरण्यामपीति ॥

अथ नाय(टि)कागतं कर्तव्यमुपदिशति—

अत्र मुख्याकृतो योग. पर्यन्ते नेतुरन्यया ॥ ७१ ॥

प्रेमार्द्रो वर्ततेऽन्यस्या नेता मुख्याभिशङ्कितः ।

अत्र नाटिकायां मुख्या नृपवंशजत्व–गम्भीरत्व–परिणीतत्वादिभिः प्रधानं नायिका तद्वशादन्तःपुरसङ्गीतकसम्बन्धेन श्रुति–दर्शनाभ्यामासन्नयाऽन्यया कन्यया योगः सम्बन्धो नायकस्य पर्यन्ते निर्वहणसन्धौ दर्शयितव्यः ॥७१॥ नेता च तल्लाभादर्वाक् प्रवर्धमानानुरागो मुख्यातश्चकितहृदयः कन्यायामुपवनादिषु सङ्केतस्थानेषु सद्वर्त्ते ॥

कृत्यान्तरमपि दर्शयति—

देवी दक्षाऽपरा मुग्धा समा धर्मा द्वयोः पुनः ॥७२॥

क्रोध–प्रसाद–प्रत्यूह–रति–च्छलादि भूरिशः ।

देवी दक्षा चतुरा निबन्धनीया । अपरा तु कन्या मुग्धा चातुर्यवर्जिता । धर्माः पुनः क्षत्रियवंशजत्व–नय–विनय–लज्जा–महत्त्व–गाम्भीर्यादयस्तुल्या द्वयोः देवी–कन्ययोर्निबन्धनीयाः ॥७२॥ तथा कन्यानुरागपरिज्ञाने देव्या राजनि क्रोधः । राज्ञा च तस्याः प्रसादनम् । देव्या च राज्ञः कन्यासमागमे विघ्नः । राज–कन्ययोः परस्परं रतिः । सर्वेषामन्योन्यं वञ्चनम् । आदिशब्दादन्यदपि शृङ्गाराङ्गं भूयो भूयो निबन्धनीयमिति ॥

अथ नाटिकालक्षणातिदेशेन प्रकरणीं लक्षयति—

एवं प्रकरणी किन्तु नेता प्रकरणोदितः ॥७३॥

एवं नाटिकोक्तचतुरङ्कत्वादिलक्षणानुसारेण प्रकरणी ग्रथनीया, किन्तु नेता प्रकरणोक्तो वणिगादिः । तेन वणिगाद्युचित एव वेष–सम्भोगादिः सर्वोऽप्यत्र व्यवहारः । स्त्र्यपि तज्जात्यनुरूपैव । फलमपि महीलाभस्य वणिगादेरनुचितत्वात् स्त्रीप्राप्तिपुरःसरं द्रव्यला[भा]दिकं द्रष्टव्यम् । कैशिकीबहुलत्वं च नाटकधर्मः, प्रकरणस्याल्पकैशिकीत्वात् । कल्प्यार्थत्वं वणिगादिनायकत्वं च प्रकरणधर्मः । तथा नाटक–प्रकरणोत्थितत्वेऽपि नाटिका–प्रकरणिकयोर्नाटकोक्तनायि(य)कानुसारेण नाय(यि)काव्यपदेशः । नायकानुसारित्वात् सर्वव्यवहाराणाम् । प्रकर्षेण क्रियते कल्प्यते अस्यामर्थ इति प्रकरणी । अल्पार्थे कपि प्रकरणिका । एते च द्वे अपि मुख्यरूपकद्वयसङ्करनिष्पन्नत्वा[ त् ] सङ्कीर्णभेदरूपे । एवमन्येऽपि सङ्करभेदा रूपकद्वय–त्रयादिसाङ्कर्येण सम्भवन्ति । परमदृष्टत्वादरञ्जकत्वाच्च न ते लक्ष्यन्त इति । नाटिकायां च राज्ञां प्रकरणिकायां तु वणिगादीनां विलासप्रधानं धर्मार्थाविरोधि वृत्तं नाटक–प्रकरणयोरिव व्युत्पाद्यम् ॥७३॥

अथ पूर्णदशा–सन्धीनि रूपकाणि लक्षयित्वा न्यूनदशा–सन्धीनि

निरूप्यन्ते । तत्रापि मनुष्यनायकप्रत्यासत्त्या प्रथमं व्यायोगं लक्षयति—

एकाहचरितैकाङ्को गर्भामर्शविवर्जितः ।
अस्त्रीनिमित्तसङ्ग्रामो नियुद्धस्पर्धनोद्धतः ॥ ७४ ॥
स्वल्पयोषिज्जनः ख्यातवस्तुर्दीप्तरसाश्रयः ।
अदिव्यभूपतिस्वामी व्यायोगो नायिकां विना ॥ ७५ ॥

एकदिवसनिवर्तनीयकार्य एक एवाङ्को यत्र । एकाहचरितत्वाचैकाङ्कत्वमस्य । दीप्तरस-नायकयुक्तत्वाद् गर्भावमर्शविवर्जनम् । दीप्तरसो हि कालक्षेपासहिष्णुतया विनिपातानां शङ्कया च प्रारम्भ-प्रयत्नानन्तरं फलागम एव यतते । एवमीहामृगनायि(य)का अपि । डिम-समवकारनायकास्तु बहुतरफलार्थित्वेन प्राप्त्याशायुक्ता दीप्तरसत्वेन च विनिपातानाशङ्किनो निर्विमर्शकाः । भाण-प्रहसनयोर्नायकस्याधमत्वादुत्सृष्टिकाङ्के शोकार्थत्वाद् वीथ्यां चासहायत्वात् सर्वेषामल्पवृत्तत्वाच्च प्रारम्भानन्तरं फलागमनिबन्धः । नाटकादिनायकस्य तु प्रेक्षापूर्वकारित्वेनार्तिसहत्वाद् हितबहुफलकर्तव्यारम्भित्वेन विनिपातप्रत्ययापाकरणाच्च सर्वावस्थासम्भवेन पञ्चापि सन्धयो भवन्त्येव । अत्र च गर्भावमर्शसन्धिप्रतिषेधे एतत्सन्धिपरिच्छेदिके प्राप्त्याशा-नियताप्ती अवस्थे अपि प्रतिषिद्धे एव । एवमुरेत्व( मपरेष्व )पि रूपकेषु तत्तत्सन्धिनिषेधे तत्तत्सन्धिपरिच्छेदिकाऽवस्थाऽपि निषिद्धैव द्रष्टव्येति । अस्त्रीति अस्त्र्यर्थसङ्ग्रामसंयुक्तश्च यथा जामदग्न्यजये परशुरामेण सहस्रार्जुनवधः कृतः । नियुद्धं बाहुयुद्धम् । स्पर्धनं शौर्य-विद्या-कुल-धन-रूपादिकृतः संहर्षः । ताभ्यामुद्धतो दीप्तः । स्वल्पस्त्रीपात्रत्वं च कैशिकीरहितत्वात् । एतेन पुरुषपात्रबाहुल्यं लभ्यते । ख्यातं प्रसिद्धं वस्तु नायकोपायलक्षणं यस्य । दीप्तानां वीर-रौद्रादीनां रसानामाश्रयः । अत एवात्र गद्यं पद्यं चौजोगुणयुक्तम् । तथा दिव्यभूपतिवर्जितं सेनापत्यमात्यादिदीप्तरस-नायकसम्पन्नः । केचिदस्य द्वादशनेतृकत्वमाम्नासिषुः । विशेषेण आ समन्ताद् युज्यन्ते कार्यार्थं संरभन्तेऽत्रेति व्यायोगः । नायिकां विनेत्यनेन नायिकायास्तदुचितस्य च दूत्यादेः परिजनस्य निषेधः । तेन नायकपरिच्छदभूताश्चेट्यादयो भवन्त्येव । अत्र च मन्त्रि-सेनापत्यादीनां युद्धादिबहुलं वृत्तं व्युत्पाद्यमिति ॥ ७४-७५ ॥

अथ क्रमप्राप्तं समवकारं लक्षयति—

विज्ञेयः समवकारः ख्यातार्थो निर्विमर्शकः ।
उदात्तदेव-दैत्येशो वीथ्यङ्गी वीर-रौद्रवान् ॥ ७६ ॥

सङ्गतैरवकीर्णैश्चार्थैः त्रिवर्गोपायैः पूर्वप्रसिद्धैरेव क्रियते निबध्यते इति समवकारः । 'ख्यातार्थ' इति बृहत्कथाऽऽदिप्रसिद्धनायकोपाय-त्रिवर्गफलो विमर्शसन्धिविवर्जितश्च । 'उदात्त' इति उदात्तत्वं महत्त्व-गाम्भीर्यादि । देव-दैत्यानां हि धीरोद्धतत्वं मर्त्यापेक्षयैव, स्वजात्यपेक्षया तु धीरोदात्तत्वमपि । अत्र च तत्तद्देव-दैत्यभक्तानामिष्टदेवताऽऽदि-कर्मप्रभावादि-कीर्तनात् महती प्रीतिर्यात्रा-जागरादि-प्रेक्षाकरण-तदनुष्ठितोपायादिषु प्रवृत्तिश्च भवतीति देव-दैत्यौ नेतारौ । एवमन्येष्वप्यमनुष्यनेतृकेषु वाच्यम् । वीथ्यङ्गानि व्याहारादीनि वक्ष्यमाणानि तद्वान् वीर-रौद्रवानित्यतिशायने मतुः । तेन त्रिशृङ्गारत्वेऽपि वीरो(र-) रौद्रो(द्रौ) प्रधानम् । देव-दैत्यानामुद्धतत्वेन शृङ्गारस्य छायामात्रत्वेन निबन्धादिति ॥ ७६ ॥

अथ कृत्यान्तरमुपदिशति—

अत्र द्वादश नेतारः फलं तेषां पृथक् पृथक् ।
अङ्कास्त्रयस्त्रिशृङ्गारास्त्रिकपटास्त्रिविद्रवाः ॥ ७७ ॥
षड्-युग्मैकमुहूर्ताः स्युर्निष्ठितार्थाः स्वकार्यतः ।
महावाक्ये च सम्बद्धाः क्रमाद् द्व्येकैकसन्धयः ॥ ७८ ॥

अत्र समवकारे नायका द्वादश । तत्र प्रत्येकं द्वादश । यदि वा प्रत्यङ्कं नायक-प्रतिनायकौ तत्सहायौ चेति चत्वारश्चत्वारस्ततः सर्वसङ्ख्यया द्वादश द्वादशेति मध्यमा वृत्तिः, तेन क्वचिन्न्यूनाधिकत्वेऽपि न दोषः । 'तेषाम्' इति द्वादशानां नायकानां पृथग्भूतानि फलानि बध्यन्ते । यथा पयोधिमथने हरि-बलिप्रभृतीनां लक्ष्म्यादिलाभाः । अत एव सहाया अपि सुग्रीवादिवन्नायकत्वेन व्यपदिश्यन्ते । त्रय इति त्रयोऽङ्का भवन्ति शृङ्गारत्रयादिविशिष्टा न त्वेकैक एकस्मिन्नङ्के शृङ्गारादीनामेकैकभावादिति ।

मुहूर्तो घटिकाद्वयम्। तत्र षण्मुहूर्तः प्रथमः। द्वितीयो द्विमुहूर्तः। तृतीय एकमुहूर्तः। एतन्मानकालनिष्पाद्यार्थास्त्रयोऽङ्का इत्यर्थः। एके तु प्रत्यङ्कं यथोदितद्विगुणं कालमानमाहुः। निष्ठितार्था अङ्कार्थसाध्यफलस्याङ्कान्तरार्थासम्बद्धत्वेन स्वस्मिन्नेव परिसमाप्तार्थाः। महावाक्ये च परिपूर्णप्रबन्धार्थसाध्ये फले सम्बद्धाः। सकलप्रबन्धसाध्यफलोपायभूतार्थास्त्रयोऽङ्का इत्यर्थः। इह तावदामुखानन्तरं सङ्क्षेपेणाङ्कत्रयार्थोपक्षेपकं बीजं निबन्धनीयम्। तदनन्तरमङ्कद्वयमवान्तरवाक्यार्थेन परस्परविच्छिन्नमायोज्यम्। तृतीयस्त्वङ्कस्तथा निबन्धनीयो यथाऽवान्तरवाक्यार्थविच्छिन्नः सर्वाङ्कार्थसम्बन्धार्थश्च भवति। एवं हि पूर्वापरानुसन्धानावधेयधियो व्यवहितार्थानुसन्धानावहितबुद्धयश्च त्रिवर्गसिद्ध्युपायव्युत्पत्त्याऽनुगृहीता भवन्ति। अङ्कान्तरार्थानुसन्धायी च परस्परासम्बद्धाङ्कत्वादत्र न बिन्दुर्निबध्यते। 'क्रमाद्' इति प्रथम-द्वितीय-तृतीयक्रमेणाङ्का ह्येकैकसन्धयः। तत्र प्रथमेऽङ्के मुखे(ख-) प्रतिमुखे, द्वितीये गर्भः, तृतीये निर्वहणमिति ॥७७-७८॥

अथ शृङ्गारादीनि व्याख्यातुमाह—

शृङ्गारस्त्रिविधो धर्म-कामार्थफलहेतुकः।
वञ्च्य-वञ्चक-दैवेभ्यः सम्भवी कपटस्त्रिधा ॥७९॥
जीवाजीवोभयोत्थः स्याद् विद्रवस्त्रिरमीषु तु।
प्रत्येकमङ्केष्वेकैकः पद्यं च स्रग्धरादिकम् ॥८०॥

धर्म-कामार्थाः फलं हेतवश्च यस्य तत्र पत्नीसंयोगरूपस्य शृङ्गारस्य परदारवर्जनादिको धर्मः फलम्, दानादिकस्तु धर्मः रूपादिलाभस्य हेतुः। काम-शृङ्गारशब्दाभ्यां स्त्री-पुंसयो रतिस्तद्धेतुश्च स्त्री-पुंसादिर्गृह्यते। तत्र स्त्री-पुंसादिरूपशृङ्गारस्य रतिरूपः कामः फलम्। रतिरूपस्य शृङ्गारस्य स्त्रीपुंसादिरूपः कामो हेतुः। अत्र च कामशृङ्गारे स्त्री परस्त्री कन्या च ग्राह्या, न पुनः स्वदारा वेश्या वा। यथा शक्रस्याहल्या। स्वदाराऽऽदौ हि धर्मस्याप्यनुप्रवेशेन केवलस्यैव कामस्य फल-हेतुभावो न स्यात्। अर्थो राज्य-सुवर्ण-धन-धान्य-वस्त्रादिः। तत्र पण्याद्युपार्जिता केषांचित् सुभगानां पुंसां चार्थ-

फलः शृङ्गारः। वेश्याऽऽदिषु च पुंसामर्थहेतुकः शृङ्गारः। देवादीनामपि गन्धर्व–यक्षादिरूपाणां राज्याद्यर्थसमीहा भवत्येव। तदाराधकानां चार्थप्राप्तिः। अत्र च पक्षे कारणे कार्योपचाराद् देवानामर्थशृङ्गारो द्रष्टव्यः। अथवाऽर्थोऽर्थनीयं परोपकार–प्रतिज्ञानिर्वाहादिकं तच्च देवादीनामपि भवत्येवेति।

मिथ्या प्रकल्पितः सत्यानुकारी प्रपञ्चः कपटः। स च यत्र वञ्चनीयः सापराधः स वञ्च्योत्थो वञ्चकस्य वञ्चनेच्छायां सत्यां कपटः। वञ्चकबुद्ध्यभावे सापराधेऽपि वञ्च्ये वञ्चनायाः सम्प(म्भ)त्ययोगात् तेन वञ्च्योत्थः कपटो वञ्चकाविनाभाव्येव। अत एवोभयजश्चतुर्थो न भवति। यत्र तु वञ्च्यापराधं विना वञ्चकबुद्ध्यैव केवलया कपटो भवति स वञ्चकसम्भवी। यत्र तु द्वयोस्तुल्यफलाभिधानवतोः काकतालीयन्यायेनैक उपचीयतेऽपरोऽपचीयते स वञ्च्यापराधाभावेन वञ्चकस्य च वञ्चनाबुद्ध्ययोगेन च दैवसम्भवीति। विद्रवन्ति त्रस्यन्ति जना अस्मादिति विद्रवोऽनर्थः। 'त्रिः' इति प्रकारत्रययुक्तः। तत्र जीवोत्थो हस्त्यादिजः। अजीवोत्थः शस्त्रादिजः। जीवाजीवोत्थो नगरोपरोधजः। तत्र हस्त्यादेः शस्त्रादेश्च व्यापारादिति। 'अमीषु तु' इति शृङ्गार–कपट–विद्रवाणां त्रिषु भेदेषु मध्ये एकैको भेदोऽङ्केषु पृथक् पृथग् निबन्धनीयः। तत्र प्रथमेऽङ्केऽन्यतमः कपट उपायः(ये), विद्रवो व्यापत्तिसम्भावनायाम्, शृङ्गारः फलांशे। एवं द्वितीये तृतीये च। प्रथमे चाङ्के शृङ्गारः कामशृङ्गार एव, रञ्जनायां साधकतन(म)स्य प्रथममुपादानात्। अत एव प्रहासोऽप्यत्र निबध्यत इति। पद्यं च स्रग्धरादिकम्, आदिशब्दाद् बह्वक्षरं शार्दूलाद्योजोगुणयुक्तं गृह्यते, न पुनर्गायत्र्यादि। तेन हि बह्वर्थाभिधाने क्लिष्टता स्यात्। केचित् पुनरल्पाक्षरं गायत्र्यादिकमर्धसम–विषमादिकं चात्र पद्यं मन्यन्ते। अनेन च गद्यस्यात्र न निषेधः, पद्यवैशिष्ट्यविधानार्थत्वादिति। समवकारे च सङ्क्षिप्तः सहास्यः शृङ्गारः कपटो विद्रवो देवासुरवैरनिमित्तं सम्प्रहारादिकं च दिव्यप्रभावसाध्यं लौकिकीभिरुपपत्तिभिर्हीनं मायेन्द्रजाल–प्लुतलङ्घनोच्छेद्य–पुस्तावपातादिबहुलयाऽऽरभट्या वृत्त्या सर्वमपि प्रहसन–कपट–विद्रवादि कुतूहलिनां परां तुष्टिमुत्पादयितुं व्युत्पाद्यते। यदाहुः—

" शूरास्तु वीर–रौद्रेषु नियुद्धेष्वाहवेषु च।
बाला मूर्खाः स्त्रियश्चैव हास्य–शोक–भयादिषु ॥ "

परितुष्यन्तीति वाक्यशेष इति ॥ ७९-८० ॥

अथ भाणस्य क्रमप्राप्तो लक्षणावसरः—

भाणः प्रधानशृङ्गार-वीरो मुख-निर्वाहवान् ।
एकाङ्को दशलास्याङ्गः प्रायो लोकानुरञ्जकः ॥ ८१ ॥

भण्यते व्योमोक्त्या नायकेन स्वपरवृत्तं प्रकाश्यतेऽत्रेति भाणः। शौर्य-सौभाग्यवर्णनाबाहुल्येनात्र वीर-शृङ्गारयोः प्राधान्यम् । शृङ्गाराङ्गत्वात् हास्योऽप्यत्राङ्गतया वर्णनीयः । तथा मुख-निर्वहणसन्धिसम्पूर्ण एकाहनिवर्तनीयत्वादेकाङ्कः । दश चात्र लास्याङ्गानि निबध्यन्ते । तानि चैतानि यथा च—

" गेयपदं स्थितं पाठ्यमासीनं पुष्पगण्डिका ।
प्रच्छेदक(कं) त्रिमूढं च सैन्धवाख्यं द्विमूढकम् ॥
उत्तमोत्तमकं चैवमुक्त-प्रत्युक्तमेव च । " इति ।

प्रायेण लोकस्य पृथग्जनस्य विट-वेश्याऽऽदिवृत्तात्मकत्वाद् रञ्जनात्मकः। विट-धूर्त-कुट्ट(ट्टि)न्यादिचेष्टितं राजपुत्रादीनामपि चातुर्यार्थं ज्ञेयमेवेति प्रायोग्रहणमिति ॥ ८१ ॥

अथ कर्त्तव्योपदेशेन नायकमुद्दिशति—

एको विटो वा धूर्तो वा वेश्याऽऽदेः स्वस्य वा स्थितिम् ।
व्योमोक्त्या वर्णयेदत्र वृत्तिर्मुख्या च भारती ॥ ८२ ॥

एको द्वितीयपात्ररहितः रितः(विटः) पल्लवकः, धूर्तश्चौर-द्यूतकारादिः वेश्याऽऽदेः पण्यस्त्री-कुलटा-शम्भल्यादेः स्वस्यात्मनो वा स्थितिं चरितं व्योमोक्त्या रङ्गाप्रविष्टद्वितीयपात्रसम्बन्धिवचनानुवादेन वर्णयेदङ्गविकारैः सामाजिकानवगमयेदत्र भाणे । भारती चात्र वृत्तिः प्रभूततया प्रधानम् । वीर-शृङ्गारयोः प्रधानत्वेऽपि व्योमोक्त्या वाचिक एवात्राभिनयो न सात्त्विकाङ्गिकाविति, न सात्वती कैशिकी वा प्रधानम् । अत्र विटादीनां परवञ्चनात्मकं वृत्तं प्रेक्षकाणामवञ्चनीयत्वापादनार्थं व्युत्पाद्यत इति । अत्र केचिद् कल्पितं वृत्तं नायकं च विटमेव मन्यन्ते ॥ ८२ ॥

अथ प्रहसनस्य समयः—

वैमुख्यकार्ये वीथ्यङ्गि ख्यातकौलीनदम्भवत् ।
हास्याङ्गि भाणसन्ध्यङ्क-वृत्ति प्रहसनं द्विधा ॥ ८३ ॥

वैमुख्यं बहुमानाभावः कार्यं प्रयोजनं यस्य। प्रहसनेन हि पाखण्डिप्रभृतीनां चरितं विज्ञाय विमुखः पुरुषो न भूयस्तान् वञ्चकानुपसर्पति। वीथ्यङ्गैर्व्याहारादिभिर्यथायोगं संयुक्तं च विधेयम्। कौलीनं जनवादः तत् ख्यातं प्रसिद्धं दम्भश्चात्मन्यतथ्यसाधुत्वारोपणरूपः ख्यातोऽत्र विधेयः। यथा शाक्यानां स्त्रीसम्पर्को(र्कों) गर्हणीयो न चौर्यम्। एवं दम्भोऽपि। हास्यो रसोऽङ्गी मुख्योऽत्र। भाणवच्च सन्धी मुख-निर्वहणे। एकोऽङ्कः भारती वृत्तिश्चात्र निबन्धनीया। हास्यरसप्राधान्येऽप्यत्र न कैशिकी वृत्तिः। निन्द्यपाखण्डिप्रभृतीनां शृङ्गारस्यानौचित्येनाभावात् केवलहास्यविषयत्वमेव। अत एव लास्याङ्गान्यत्राल्पान्येवेति। 'द्विधा' इति द्विप्रकारं शुद्धं सङ्कीर्णं चेति ॥८३॥

तत्र नायककथनद्वारेण शुद्धमाह—

निन्द्य-पाखण्डि-विप्रादेरश्लीलासभ्यवर्जितम् ।
परिहासवचःप्राय शुद्धमेकस्य चेष्टितम् ॥ ८४ ॥

निन्द्याः शीलादिना गर्हणीयाः, पाखण्डिनः शाक्य-भगवत्तापसादयः, विप्रा जातिमात्रोपजीविनो द्विजन्मानः, आदिशब्दादन्यस्याप्येवंविधस्य दुष्टस्यैकस्यैव कस्यचिच्चेष्टितं वृत्तमश्लीलेन ग्राम्येण जुगुप्सा-ऽमङ्गल्यहेतुना च असा(असभ्ये)न च व्रीडाकारिणा रहितम्। परिहासप्रधानवचनबहुलं चैतदभिधायि रूपकमपि चोपचार(रात्) शु(शु)द्धं प्रहसनम्। द्वितीयवेश्यापिचार(दिचारि)तसाङ्कर्यरहितत्वादिति ॥ ८४ ॥

अथ सङ्कीर्णम्—

सङ्कीर्णमुद्धताकल्प-भाषाऽऽचार-परिच्छदम् ।
बहूना बन्धनी(की)-चेट-वेश्याऽऽदीनां विचेष्टितम् ॥ ८५ ॥

बहूनां चरितैः सङ्कीर्णत्वात् सङ्कीर्णम् । अत्युल्बणवेष-व्याहाराचार-परिजनम् । उद्धतत्वं च सतामनुचितत्वाद् बन्धकी स्वैरिणी चेटो दासः वेश्या पण्यस्त्री आदिशब्दात् शम्भली-धूर्त-वृद्ध-षण्ढ-पाखण्डि-विप्र-भुजग-चार-भटादयो विकृतवेष-भाषा-ऽऽचारा गृह्यन्ते । विगर्हणीयं हास्यजनकं चेष्टितमनुष्ठानम् । एकस्य बन्धक्यादेः कस्यचिद् द्वारेण यत्रानेक एवंविध एव प्रकर्षेण हस्यते तद् सङ्कीर्णचरितविषयत्वात् सङ्कीर्णम् । शुद्धे तु पाखण्ड्यादेरेकस्यैव चरितं प्रहस्यत इति पूर्वरसाद् भेदः । अन्ये तु-' स्वभावशुद्ध-पाखण्ड्यादेश्चरितं प्रहस्यते तद् सङ्कीर्णचरितविषयत्वात् सङ्कीर्णम् 'इत्याहुः । सङ्कीर्णमनेकाङ्कं केचिदनुस्मरन्ति । अत्र च प्रथमेन श्लोकेन सामान्यलक्षणं, द्वितीयेन शुद्धस्य, तृतीयेन च सङ्कीर्णस्य लक्षणम् । उभयत्र तु विट-चेट्यादेः परिजनस्य भूयस्त्वमिति । प्रहसनेन च बाल-स्त्री-मूर्खाणां हास्यप्रदर्शनेन नाट्ये प्ररोचना क्रियते । ततः सञ्जातनाट्यरुचयः शेषरूपकैर्धर्मार्थ-कामेषु व्युत्पाद्यन्ते । तथा वृत्तच्युतस्य पाखण्डिप्रभृतेर्वृत्तं शुद्धम्, बन्धक्यादेश्च धूर्तादिसङ्कुलं सङ्कीर्णं वृत्तं त्याज्यतया व्युत्पाद्यत इति ॥ ८५ ॥

अथ डिमस्य लक्षणक्रमः—

अशान्त-हास्य-शृङ्गार-विमर्शः ख्यातवस्तुकः ।
रौद्रमुख्यश्चतुरङ्कः सेन्द्रजाल-रणो डिमः ॥ ८६ ॥

शान्त-हास्य-शृङ्गाररूपरसत्रयेण विमर्शाख्यचतुर्थसन्धिना च रहितत्वाच्छेषरसैरन्यसन्धिभिश्च युक्तः । शान्तस्य करुणहेतुकत्वेनोपलक्षणत्वात् करुणोऽपि निषिध्यते दुःखप्रकर्षात्मकत्वात् । इह च करुण-रौद्र-भयानक-बीभत्साश्चत्वारो रसा दुःखात्मानः । शृङ्गार-हास्य-वीराद्भुत-शान्ताः पञ्च सुखात्मकाः । दिव्यानां च सुखबाहुल्येनाल्पदुःखत्वादन्यथा दिव्यत्वमेव न स्यादित्येषां तत्प्रभावानुगृहीतानामन्येषां च दुःखात्मानो रसा अप्रयोज्या एव । समवकारादौ तु यद् रौद्रादिवर्णनं तद् दिव्यहेतुकस्वाभाविकसुखाबाधकत्वाददुष्टमेव । मर्त्याद्यवज्ञाऽऽदिसमुत्थो हि रौद्रः, स्वाधिकक्रोधादिसम्भवो भयानकः, मर्त्याद्यशुचिशरीराद्यवलोकनाद् बीभत्सश्च दिव्यानामागन्तुक एव, करुणः पुनरिष्टवियोगप्रभवशोकप्रकर्षरूपत्वात् स्वाभाविकसुखपरिपन्थी सर्वदैषामवर्णनीय एव, शान्तोऽपि विषयासक्तिमत्त्वादसम्भव्येव ।

दुःखात्मकस्य करुणरसस्यात्र प्राधान्यात्। दिव्यानां च सुखबाहुल्येन तत्सम्बन्धायोगात्। ख्यातं भारतादौ प्रसिद्धं यद् युद्धं तत्र सम्भवि करुणरस-बहुलं यद् वृत्तं तत् स्वयं प्रसिद्धं वा [ऽ]सदत्र निबन्धनीयम्। भाणप्रतिपादितं मुख-निर्वहणाख्यसन्धिद्वयम्। परिदेवितबाहुल्यान्मुख्या भारती वृत्तिरेकाह-निवर्तनीयचरितत्वादेकाङ्कश्चात्र कर्तव्यः। शौर्यादिमदावलिप्तानां परस्परं दोषोद्घट्टनं वाग्युद्धं तद्बहुलः। मत्वर्थीयेनो भूम्न्यत्र विधानात्। वाग्युद्धं चानुशोचनपरायणानामिति रौद्राप्रवेशेन न करुणस्याङ्गित्वव्याघातः। करुणो रसोऽङ्गी प्रधानं बाहुल्यनिबन्धादत्र विधेयः। ख्यातयुद्धोत्थवृत्ते वध-बन्धादिसद्भावेनेष्टवियोगादिप्राचुर्यादिति ॥ ८८ ॥

अथ कृत्यशेषमुपदिशति—

निर्वेदवाचो भूम्नाऽत्र योषितां परिदेवितम्।
नरा निवृत्तसङ्ग्रामाश्चेष्टाश्चित्रा विसंस्थुलाः ॥ ८९ ॥

अत्रोत्सृष्टिकाङ्के यासु श्रुतासु निर्वेदो जायते, ता निर्वेदवाचो बाहुल्येन निबन्धनीयाः। दैवोपालम्भात्मनिन्दादिरूपानुशोचनात्मकं परिदेवितं च योषितां बहुधा वर्णनीयम्। पुमांसश्चोपरतोद्धतप्रहार-वध-बन्ध-ताड-नादिरूपसङ्ग्रामाः पात्रत्वेन नियोज्याः। भूमिनिपात-विवर्तितोरः-शिरस्ता-डन-स्वकेशत्रोटनादिका नानाप्रकाराश्चेष्टा विसंस्थुला दर्शनीयाः। अत्र चोत्सृष्टिकाङ्के उत्तमानां मध्यमानां च बहुविधव्यसनपातेन वैरस्यार्दितानां महाविपद्यप्यविषादिनां स्थिराणां च पुनरुन्नतिर्दृश्यत इत्यविषादं चित्तस्थैर्यं च विधातुं स्त्रीपरिदेवितबहुलं वृत्तं व्युत्पाद्यत इति ॥ ८९ ॥

अथेहामृगस्य लक्षणप्रपञ्चे पर्यायः—

ईहामृगः सवीथ्यङ्गो दिव्येशो दृप्तमानवः।
एकाङ्कश्चतुरङ्को वा ख्याताख्यातेतिवृत्तवान् ॥ ९० ॥

दिव्यस्त्रीहेतुसङ्ग्रामो निर्विश्वासः सविद्रवः।
स्त्र्यपहार-भेद-दण्ड प्रायो द्वादशनायकः ॥ ९१ ॥

ईहा चेष्टा मृगस्येव स्त्रीमात्रार्थात्रेतीहामृगः। सह वीथ्यङ्गैर्व्याहारादि-

भिर्वर्त्तते । दिव्येशो दिव्यनायकः । दृप्ता उद्धता मानवा मर्त्यपुरुषपात्राण्यत्र । एकाङ्कश्चतुरङ्को वेति । अत्र च वृत्तसङ्क्षेप-विस्तरानुरोधिनी कविस्वेच्छा प्रमाणम् । एकाङ्कत्वे एकाहनिर्वर्त्यमेव चरितम् । चतुरङ्कत्वे तु चतुर्दिननिर्वर्त्यम् । ख्याताख्यातं प्रसिद्धाप्रसिद्धं यदितिवृत्तं तद्वान् । प्रशंसायां च मतुस्तेन चतुरङ्कत्वे परस्पराङ्कसंबद्धमितिवृत्तम् , न तु समवकारवदसम्बद्धम् । दिव्यस्त्रीहेतुः सङ्ग्रामो यत्र । अत्र हि दिव्यां नायकस्त्रियमनिच्छन्तीं प्रतिनायकोऽपहरति । ततस्तन्निमित्तको नायक-प्रतिनायकयोः सङ्ग्रामो निबन्धनीयः । निर्गतो विश्वासः परस्मिन् प्रत्ययो यस्मात् । आवेगानर्थ-परस्परस्पर्धाऽऽदयो विद्वरस्तद्युक्तः । स्त्रीनिमित्तमपहार-भेद-दण्डा यत्र । ते च यथासम्भवं स्त्रीविषया अन्यविषया वा । भेदः साम-दानादिना विश्लेषापादनम् । दण्डो बन्धादिः । प्रायोग्रहणं नायिकान्यूनाधिकत्वख्यापनार्थम् । ९०-९१ ॥

अथ कृत्यशेषमुपदिशति—

व्याजेनात्र रणाभावो वधासन्ने शरीरिणि ।
व्यायोगोक्ता रसाः सन्धि-वृत्तयोऽनुचिता रतिः ॥ ९२ ॥

वधासन्ने सम[रा]नन्तरं भाविवधयोग्ये शरीरिणि व्याजेन पलायनादिना रणाभावो विधेयः । आस्तां साक्षान्नेपथ्येऽपि वधो न वर्णनीयः । रसा वीर-रौद्राद्या दीप्ताः । सन्धयो गर्भावमर्शवर्जितास्त्रयः । वृत्तयश्च कैशिकीहीनास्तिस्र एव । 'सन्धि-वृत्तयः' इतीतरेतरयोगो द्वन्द्वः । अनुचिता रतिः रत्याभासः स च प्रतिनायकस्य निष्प्रेमस्त्रीविषयत्वादिति ॥ ९२ ॥

अथ क्रमप्राप्तां वीथीं लक्षयति—

सर्वस्वामिरसा वीथी त्वेकाङ्का द्व्येकपात्रिका ।
मुख-निर्वाहसन्धि. स्याद् सर्वरूपोपयोगिनी ॥ ९३ ॥

नाटकादिसर्वरूपकाणामेतदुक्तं वक्रोक्तिमार्गेण गमनाद् वीथीव वीथी । सर्वे स्वामिन उत्तम-मध्यमाधमरूपाः । सर्वे रसाश्च शृङ्गारादयः पर्यायेणात्र विधातव्याः । यदाह कोहलः—

" उत्तमाधम-मध्याभिर्युक्ता प्रकृतिभिस्त्रिधा ।
एकहार्या द्विहार्या वा सा वीथीति(त्यभि)संज्ञिता ॥ " इति ।

शङ्कुकस्त्वधमप्रकृतेर्नायकत्वमनिच्छन् प्रहसन–भाणादौ हास्यरसप्रधाने विटादेर्नायकत्वं प्रतिपादयन् कथमुपादेयः स्यादिति । एकाङ्केत्यनेनैकदिवसप्रयोज्यमितिवृत्तमत्रेति दर्शयति । द्वाभ्यां पात्राभ्यामुक्ति–प्रत्युक्ति–वैचित्र्यविशिष्टाभ्यामेकेन वा पात्रेणाकाशभाषितसमन्वितेन युक्ता वीथी कविना स्वेच्छया विधेया । मुख–निर्वाहाख्यौ सन्धी यस्याम् । सर्वेषां रूपकाणां नाटकादीनां वक्रोक्त्यादिसङ्कुलत्रयोदशाङ्गप्रवेशेनोपयोगिनी वैचित्र्यकारिका । अत एवान्ते लक्षिता । वक्रोक्तिसहस्रसङ्कुलत्वेन शृङ्गार–हास्ययोः सूचनामात्रत्वात् कैशिकीवृत्तिहीनत्वम् । अत्र च बहुविधा वक्रोक्तिविशेषा उत्तम–मध्यमाधमनायकानां व्युत्पाद्यन्त इति ॥ ९३ ॥

अथास्या अङ्गान्यभिधीयन्ते—

व्याहारोऽधिबलं गण्डः प्रपञ्चस्त्रिगतं छलम् ।
असत्प्रलापो वाक्केली नालिका मृदवं मतम् ॥ ९४ ॥

उद्घात्यकावलगिते अथावस्पन्दितं स्मृतम् ।
भारतीवृत्तिवर्त्तीनि वीथ्यङ्गानि त्रयोदश ॥ ९५ ॥

एतानि त्रयोदश वीथ्यङ्गानि विविधवक्रोक्त्यादिरूपत्वाद् भारत्यां वृत्तौ वर्तनशीलानि । अत एव वीथ्यप्येषामङ्गानामङ्गिभूता भारतीवृत्त्येकाद(कदे)शः ॥ ९४–९५ ॥

तत्र प्रथमं व्याहारः—

अन्यार्थो भाविदृष्टिर्वा व्याहारो हास्यलेशगी ।

अन्योऽर्थः प्रयोजनं यस्या भाविनी वा भविष्यन्ती दृष्टिर्दर्शितविषयोऽर्थो यस्याः सा हास्ये लेशप्रधाना गीर्वाणी । विविधोऽर्थ आह्रियतेऽनयेति व्याहारः । तत्रान्यार्थो यथा मालति(वि)काग्निमित्रे लास्यप्रयोगावसाने मालती(विका) निर्गन्तुमिच्छति । विदूषकः–"भोदी[1] ! चिट्ठ दाव, विसुमरिदं खु वो किंचि तं ताव पुच्छिस्सं ।

---

१ भवति ! तिष्ठ तावत्, विस्मृतं खलु व किञ्चित् तत् तावत् प्रक्ष्यामि ।

गणदासः—वत्से ! तिष्ठ तावदुपदेशविशुद्धौ गमिष्यसि ।

( मालवि(चि)का स्थिता )

धारणी—गोदमवयणं पि अज्जो हियए पमाणीकरेदि ![1]

गणदासः—देवि ! मा मैवम् । देवप्रत्ययात् सम्भाव्यते । सूक्ष्मदर्शी गौतमः । पश्य—

मन्दोऽप्यमन्दतां याति संसर्गेण विपश्चितः ।
पङ्कच्छिदः फलस्येव निकर्षेणाविलं पयः ॥

( विदूषकं विलोक्य ) किं विवक्षितमार्यस्य ?

विदूषकः—पढमं दाव पेक्खगे पुच्छ[2]। पच्छा जो मए कम(म्म)भेदो लक्खिदो, तं भणिस्सं ।

गणदासः—भगवति ! गुणो वा दोषो वा यथादृष्टमभिधीयताम् ।

परिव्राजिका—यथा मे दर्शनं तथा सर्वमनवद्यम् ।

गणदासः—देवः कथं मन्यते ?

राजा—वयमपि स्वपक्षं प्रति शिथिलाभिमानाः संवृत्ताः ।

गणदासः—देव ! अद्य नर्तयिताऽस्मि ।

धारणी—[3]दिट्ठिया पेक्खगाराधणेण । ( गणदासमवलोक्य ) अज्जो वड्ढ(ड्ढ)दि ।

गणदासः—देवीपरिग्रहो मे वृद्धिहेतुः । ( विदूषकं विलोक्य ) वदेदानीं यत् ते मनः कर्षति ।

विदूषकः—[4]पढमोवदेसदंसणे पढमं बंभणस्स पूआ इच्छिदव्वा, सा तए लंघिदा ।

---

१ गौतमवचनमपि आर्यो हृदये प्रमाणीकरोति ।

२ प्रथमं तावत् प्रेक्षकान् पृच्छ, पश्चाद् यो मया (कम)कर्मभेदो लक्षितस्तं भणिष्यामि ।

३ दिष्ट्या प्रेक्षकाराधनेन । आर्यो वर्धते ।

४ प्रथमोपदेशदर्शने प्रथमं ब्राह्मणस्य पूजेष्टव्या, सा त्वया लङ्घिता ।

परिव्राजिका—अहो ! प्रयोगाभ्यन्तरः प्रश्नः ।

( सर्वे प्रहसन्ति, मालती स्मितं करोति ) "

इत्ययं नायकस्य विश्रब्धनायिकादर्शनार्थं प्रयुक्तो हास्यलेशकारित्वाद् व्याहार इति ।

भाविदर्थियथा रत्नावल्यां द्वितीयेऽङ्के राजा—

" उद्दामोत्कलिकां विपाण्डुररुचिं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥ "

अत्र राज्ञा वासवदत्तां प्रति भाव्यर्थदर्शनं हास्येनोक्तमिति ।

अन्ये तु वर्तमानप्रत्यक्षार्थवाचकं हास्यलेशकरं वचो व्याहारमिच्छन्ति । यथा मृच्छकट्यां विदूषको गणिकाया वसन्तसेनाया गृहं प्रविशन् वसन्तसेनाया मातरं दृष्ट्वा पृच्छति—" का एसा बंधुला ?

[ चेटी— ] एसा अज्जुआए जणणी अत्तिया ।

विदूषकः—जैदि मरे ता सीयालसहस्सस्स पज्जत्तिका । अथ किं एदं पवि(वे)सिय दुवारसोहा निम्मविदा ? आदु उक्खंदाव(दवे)ण पवेसिदा ?

चेटी—अय्य ! मा एत्तियं अवेक्खसु । अत्तिका चाउत्थएण वा(बा)-धीयदि ।

विदूषकः—भयवं चाउत्थय ! मं पि बंभणं अणुकंपेहि । " इति ।

यथा नलविलासे लम्बस्तनीकापालिकीं प्रति विदूषकः—

" [6]एकं दाव मे संसयं भंजेहि । मह बंभणीए माया मू(थू)लकुट्टणी जा पाडलिपुत्ते वसदि, सा किं तुमं ? आदु अवा का वि ? " इत्यादीति ।

---

१ का एषा बन्धुला(रा) ? । २ एषाऽज्जुकाया जननी अत्तिका । ३ यदि म्रियेत, तदा शृगालसहस्रस्य पर्याप्ता । अथ किम् एता प्रवेश्य द्वारशोभा निर्मापिता ? अथवाऽवस्कन्देन प्रवेशिता ?

४ आर्य ! मैतावदन्वीक्षस्व । अत्तिका चातुर्थिकेन बाध्यते ।

५ भगवन् चातुर्थिक ! मामपि ब्राह्मणमनुकम्पस्व ।

६ एकं तावन्मे संशयं भङ्ग्ध्व । मम ब्राह्मण्या माता स्थूलकुट्टिनी या पाटलिपुत्रे वसति, सा किं त्वमुतान्या काऽपि ?

अथाधिबलम्—

मिथो जल्पे स्वपक्षस्य स्थापनाऽधिबलं बलात् ॥ ९६ ॥

मिथः परस्परं जल्पे उक्ति-प्रत्युक्तिक्रमे क्रियमाणे स्वपक्षस्य स्वाभ्युपगमस्य परस्परप्रज्ञोपजीवनबलात् स्थापनासुघटितत्वं क्रियते यत्र तदधिकबलसम्बन्धादधिबलम् ।

यथा कृत्यारावणे प्रथमेऽङ्के सीतावेषधारिण्या सू(शू)र्पणखया सह संवादे ( नेपथ्ये )—

"हा भ्रातर्लक्ष्मण ! परित्रायस्व मां परित्रायस्व ।

( इति श्रुत्वा सू(शू)र्पणखा मोहमुपगता )

तस्यां च मूढायां लक्ष्मणः—आर्ये ! समाश्वसिहि समाश्वसिहि ।

सू(शू)र्पणखा—(अक्षिणी उन्मील्य सक्रोधं सक(ह)सा च) आः अणज्ज ! अज्ज वि तुमं चिट्ठसि य्येव । अहो ! दाणि सि तुमं निस्संसो निग्घिणो य ! चिट्ठदु दाव भादुयसिणेहो, कध णाम इक्खाउकुलसंभवेण महाखत्तिएण भविय एवं तए ववसियं ? णं भणामि, एवमकरंतो सत्तू वि न उव(वे)क्खीयदि, किं पुण अज्जउत्तो ?

लक्ष्मणः—आर्ये ! ननु त्वदर्थं एवार्येण स्थापितोऽस्मि ।

सू(शू)र्पणखा—कुमार ! एवं मन(म) अत्थो कदो होदि । एवं च अहं परिरक्खिदा होमि । ता सव्वधा अन्नं ग्येर दे अणिट्ठं अभिप्पायं लक्खेमि ।" इत्यादि ।

यथा वा रघुविलासे—

रावणः—(साक्षेपम्) आर्य ! सीतापहारमतितरां जुगुप्सते लङ्कालोकः?

मयः—( सभयम् ) अथ किम् ।

रावणः—( सावहेलम् )

अविदितपथः प्रेम्णां बाह्योऽनुरागर(रु)जां जडो
वदतु दयितामैत्रीवन्ध्यो यथाप्रतिभं जनः ।
मम पुनरियं सीता राज्यं सुखं विभवः प्रियं
हृदयमसवो मित्रं मन्त्री रतिर्धृतिरुत्सवः ।

( पुनः सखेदम् ) आर्य ! किमेकमस्य पामरप्रकृतेर्लङ्कालोकस्य निचारचातुरीवैमुख्यमुद्भावयामि ?

अस्यां प्रेम ममेव वाङ्-मनसयोरुत्तीर्णमन्यस्य चेद्
वैदेह्यां नयनैकलेह्यलवणप्रारोहभूमौ भवेत् ।
कापेयं परिरभ्य स प्रकटयन्नुल्लुण्ठभूयं हठात्
किञ्चित् कामितमादधीत कृतवान् वेधास्तु मां रावणम् ॥

अपरथा पुनरार्य !

अहंयुनिकराग्रणीरवगणय्य धर्मार्गलां
प्रसह्य यदि जानकीमभिरमेत लङ्कापतिः ।
अमुष्य ननु रोदसीविजयनिष्णदोष्णः समि-
न्मृगव्यरसिकस्तदा क इव नाम वैतण्डिकः ! ॥

मयः—( अपवार्य मन्दोदरीं प्रति ) वत्से ! यथावस्थितमभिधाने लङ्कापतौ किमतः परं विज्ञापयामि ? " इति ।

केचित् त्वन्योन्यवाक्याधिक्योक्तिः स्पर्धयाऽधिबलं भवेदिति पठन्ति। एतदप्यर्थभेदादनेन सङ्गृहीतमिति ॥ ९६ ॥

अथ गण्डः—

गण्डोऽकस्माद् यदन्यार्थं प्रस्तुतानुगतं वचः ।

अन्याभिप्रायेणाकस्मात् प्रयुक्तं प्रतिवचनतयाऽनुच्चारितमपि प्रतिवचनरूपतया प्रक्रान्तेन यत् सम्बद्धं वचनं तद् दुष्टार्थगर्भत्वाद् दुष्टशोणितगर्भगण्ड इव गण्डः । यथोत्तरचरिते—

" रामः—( सीतामालोक्य )

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः ।
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥

( प्रविश्य ) प्रतीहारी—[1]देव ! उवत्थिदो ।

रामः—अयि ! कः ?

प्रतीहारी—[2]देवस्स आसन्नपरिचारओ दुम्मुहो । " इति ।

अत्राकस्मात् प्रतीहारीवचनमन्याभिप्रायप्रयुक्तं प्रस्तुतरामवचसा संयुज्यमानत्वात् गण्डः ।

यथा वा बालिकावञ्चितके—"कंसः—

रिष्टस्तावदुदग्रशृङ्गविकटः शैलेन्द्रकल्पो वृषः
सप्तद्वीपसमुद्रजस्य पयसः शोषक्षमा पूतना ।
केशी वाजिवपुः खुरैर्विघटयेदापन्नगान्मेदिनीं
सार्धं बन्धुभिरेवमूर्जितबलं कः कंसमास्कन्दति ? ॥

( नेपथ्ये )

[1]जो अन्नओ पउत्तो अन्नेण य वड्ढिओ महुप्पहवो ।
कण्हो सो परउट्ठो मारेइ न कोइ मारेइ ॥ "

इदं रङ्गमध्यप्रविष्टपात्रपठितेन वचसा नेपथ्यपठितमनिष्टार्थसूचकं संयुज्यमानं चूलिका गण्डः ।

---

१ देव ! उपस्थितः । २ देवस्यासन्नपरिचारको दुर्मुखः ।

१ योऽन्यतः प्रयुक्तोऽन्येन वर्धितो मधुप्रभवः । कृष्णः स परपुष्टो मारयति न कोऽपि मारयति ॥

यथा वा सत्यहरिश्चन्द्रे—

" राजा—कपिञ्जल ! पुरो गत्वा विलोकय, आश्रमः कियति दूरे ?

( ' यदादिशति देवः ' इत्यभिधाय कपिञ्जलो निष्क्रान्तः । )

राजा—( सखेदम् )

धिग् मां भ्रूणविघातिनं सकलुषं धिग् जीवितं मेऽखिल-
क्षोणीलोककरोपतापजनिता धिग् धिङ् ममैताः श्रियः ।
पुण्यास्ते करुणामृतार्द्रमनसो ये नाम वाचंयमा
हस्तारोपितशर्माणि प्रतिकलं धूत्ताः शुभे कर्मणि ॥

कुन्तल ! वयमिदानीं सर्वस्वपरित्यागमीहामहे ।

( प्रविश्य ) कपिञ्जलः—देव ! प्रत्यासन्नं पश्य ।

राजा—किं सर्वस्वपरित्यागम् ?

कपिञ्जलः— नहि, मुनीनामाश्रमम् । " इति ॥

अथ प्रपञ्चः—

प्रपञ्चः सस्तवं हास्यं मिथो मिथ्यैकलामकृत् ॥ ९७ ॥

यथा रत्नावल्यां राजा कदलीगृहे चित्रगतां सागरिकां पश्यन् सुसङ्गताया दर्शने फलहकं प्रच्छाद्य तामाह—" सुसङ्गते ! कथमिहस्थो भवत्या ज्ञातः ?

सुसङ्गता—[1]भट्टा ! न केवलं तुमं, समं चित्तफलएण सव्वो वुत्तंतो मए जाणिदो, ता गडुय देवीए निवेदइस्सं ।

वसन्तकः—( अपवार्य )[2]भो ! सव्वं संभवीयदि । मुहरा खु एसा गब्भदासी । ता किंचि दइय परिदोसेहि णं ।

राजा—( सुसङ्गताया अलकान् प्रमार्जयन् ) सुसङ्गते ! क्रीडामात्रक-

---

१ भर्तः ! न केवलं त्वम्, सम चित्रफलकेन सर्वो वृत्तान्तो मया ज्ञातः, तद् गत्वा देव्यै निवेदयिष्यामि ।

२ भोः ! सर्वं सम्भाव्यते । मुखरा खल्वेषा गर्भदासी, तद् किंचिद् दत्वा परितोषयैनाम् ।

मैवैतत्, तथापि नाकारणे त्वया देवी खेदयितव्या। इदं च ते पारितोपिकम्।"
( इति कर्णाभरणं ददाति )

सुसङ्गता—( प्रणम्य सस्मितम् ) "भट्टा ! प्र(प)सादो मे कण्णाभरणेण।" इत्यादि।

अत्र राज-सुसङ्गतयोर्मिथो देव्यै निवेदयिष्यामि इति हास्यम्। 'भट्टा पसादो' इति स्तवसहितमेकस्य राज्ञः सागरिकासङ्गमलाभकारणं प्रपञ्चोऽसद्भूतत्वात्। सुसङ्गताकर्णाभरणलाभस्तु मुख्यसाध्यं प्रत्यनुपयोगित्वान्न विवक्षितः। केचित् त्वसद्भूतेन पारदार्यादिनैपुण्यादिना योऽन्योऽन्यस्तवो हास्यहेतुस्तं प्रपञ्चमाहुः। यथा—

"रंडा चंडा दिक्खिदा धम्मदारा मज्जं मंसं खज्जए पिज्जए वा।
भिक्खा भोज्जं चम्मखंडं च सेज्जा कोलो धम्मो कस्स नो भादि रम्मो?॥"

अन्ये तु द्वयोर्लाभं विना मिथ्यारूपं हास्यं संस्तवयुक्तं प्रपञ्चत्वेन मन्यन्ते। यथा प्रयोगाभ्युदये—

"तरङ्गदत्तकचेटी—"अम्मो ! अयं खु एसो संचारिमं उवहासपट्टणं अय्य भंडीरवो इदो य्येवागच्छदि।

विदूषकः—( उपसृत्य ) "मोदी ! सागदं ते।

चेटी—( स्वगतम् ) "परिहासइस्सं दाव णं। [ प्रकाशम् ] को दाणि एसो अम्हाणं पेसणयारओ चेडउ त्ति।

विदूषकः—"अहं घडदासीणं सामिणो।

चेटी—[1]किं चेडउ त्ति भणिदे कुविदो तुमं ?

विदूषकः—[2]को दाणि विसेसो घडदासीणं कुंभदासीणं च ?

चेटी—[3]मा कुप्प, भट्टउत्तो त्ति भणिस्सं ।

विदूषकः—[4]भोदी ! तुवं पि मा कुप्प, अज्जा इति भणिस्सं ।

चेटी—[5]अहो ! भट्टउत्तस्स ग(म)दी ।

विदूषकः—[6]अहो ! आदिरूआ अज्जया । " इति ॥ ९७ ॥

अथ त्रिगतम्—

त्रिगतं शब्दसाम्येन भिन्नस्यार्थस्य योजनम् ।

भिन्नस्य प्रस्तुतादन्यस्य । त्रिगतमनेकार्थगतम् 'शब्दस्यानेकार्थत्वात्' तेन द्व्यर्थमपि । यथा देवीचन्द्रगुप्ते द्वितीयेऽङ्के प्रकृतीनामाश्वासनाय शकस्य ध्रुवदेवीसम्प्रदाने अभ्युपगते राज्ञा रामगुप्तेनारिवधार्थं यियासुः प्रतिपन्नध्रुवदेवीनेपथ्यः कुमारचन्द्रगुप्तो विज्ञपयन्नुच्यते । यथा—

"प्रत्ति(ति)ष्ठोक्तिषु न खल्वहं त्वां परित्यक्तुमुत्सहे ।

प्रत्यग्रयौवनविभूषणमङ्गमेतद्
रूपश्रियं च तव यौवनयोग्यरूपम् ।
सक्तिं च मय्यनुपमामनुरुध्यमानो
देवीं त्यजामि बलवांस्त्वयि मेऽनुरागः ॥

अन्यस्त्रीशङ्कया ध्रुवदेवी—[7]यदि भत्तिं अवेक्खसि तदो मं मंदभाइणिं परिचयसि !

राजा—अपि च, त्यजामि देवीं तृणवत् त्वदन्तरे ।

---

१ किं चेटक इति भणिते कुपितस्त्वम् ?

२ क इदानीं विशेषो घटदासीनां कुम्भदासीनां च ?

३ मा कुप्य, 'भट्टपुत्रः' इति भणिष्यामि ।

४ भवति ! त्वमपि मा कुप्य, 'आर्या' इति भणिष्यामि ।

५ अहो ! भट्टपुत्रस्य मतिः ।

६ अहो ! अतिरूपाऽऽर्या ।

७ यदि(तो) भक्तिमपक्षसे, ततो मा मन्दभागिनीं परित्यजसि !

ध्रुव०—[1]अहं पि जीविदं परिच्चयंती अज्जउत्तं पढमयरं य्येव परिचइस्सं।

राजा—त्वया विना राज्यमिदं हि निष्फलम्।

ध्रुवदेवी—[2]ममावि संपदं निप्फलो जीवलोओ सुहपरिच्चयणीओ भविस्सदि।

राजा—उद्वेति देवीं प्रति मे दयालुता।

ध्रुवदेवी—[3]इयं अज्जउत्त! ईदिसी दयालुदा! जं अणवरद्धो जणो अणुगदो एवं परिचईयदि।

राजा—त्वयि स्थितं स्नेहनिबन्धनं मनः।

ध्रुवदेवी—[4]अदो य्येव मंदभाआ परिचइयामि।

राजा—त्वय्युपारोपितप्रेम्णा त्वदर्थे यशसा सह।
परित्यक्ता मया देवी जनोऽयं जन एव मे॥

ध्रुवदेवी—[5]हंजे! इयं सा अय्यउत्तस्स करुणादा!

सूत्रधारी—[6]देवि! पडंति चंदमंडलाउ [वि] चुडुलीओ, किं एत्थ करीयदि?

राजा—देवीवियोगदुःखार्तस्त्वमस्मान् रमयिष्यसि।

ध्रुवदेवी—[7]वियोगदुक्खं पि दे अकरुणस्स अत्थि य्येव!

राजा—त्वद्दुःखस्यापनेतुं सा शतांशेनापि न क्षमा।" इति।

एतत् स्त्रीवेषधारिचन्द्रगुप्तप्रबोधनार्थमभिहितमपि विशेषणा(ण)साम्येन

---

१ अहमपि जीवितं परित्यजन्ती आर्यपुत्रं प्रथमतरमेव परित्यक्ष्यामि।

२ ममापि साम्प्रतं निष्फलो जीवलोकः सुखपरित्यजनीयो भविष्यति।

३ इयमार्यपुत्र! ईदृशी दयालुता! यदनपराद्धो जनोऽनुगत एव परित्यज्यते।

४ अत एव मन्दभागा परित्यज्ये।

५ हञ्जे! इयं साऽऽर्यपुत्रस्य करुणता!

६ देवि! पतन्ति चन्द्रमण्डलादप्युल्काः, किमत्र क्रियते?

७ वियोगदुःखमपि तेऽकरुणस्यास्त्येव!

देव्या स्त्रीविषयं प्रतिपन्नमिति भिन्नार्थयोजकम् । एवं ऽन्यर्थमपि श्लेषादि-वशादुदाहार्यम् ।

अथवा श्रुतिसारूप्येणैकस्यैव प्रश्नरूपतया सतः प्रतिवचनतया भिन्नार्थस्य योजनम् । यथा विक्रमोर्वश्याम्--

" सर्वक्षितिभृतां नाथ ! दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिंस्त्वया विरहिता मया ॥ "

अत्र प्रश्ने महीभृतः प्रतिशब्देनैतदेवोचरम् ।

यद्वा शब्दोऽव्यक्तं ध्वनिमात्रं तत्साम्येनानेकार्थयोजनं त्रिगतम् । यथेन्दुलेखायां वीथ्याम्—" राजा—वयस्य !

किं नु कलहंसनादो मधुरो मधुपायिनां नु झङ्कारः ।
हृदयगृहदेवतायास्तस्या नु सनूपुरश्चरण इति ॥"

अथ च्छलम्—

वचोऽन्यार्थं छलं हास्य-वञ्चना-रोपकारणम् ॥ ९८ ॥

प्रयोजनान्तरेण प्रयुक्तं यद् वचनमन्यस्यान्यस्य हास्य-वञ्चना-रोपकारणम्, तद् वञ्चनाहेतुत्वाच्छलम् । यथा—

" केस्स व न होइ रोसो दट्ठूण पियाए सव्वणं अहरं[1] ।
सवामल(भमर)पउमग्घाइरि वारियवामे ! सहसु इण्हिं ॥ "

एतद्वचः सख्या भर्तृप्रत्यायनप्रयोजनेनोक्तं विदग्धजनस्य हास्यं स्वसु( श्वशु )रादेर्वञ्चनां सपत्न्या रोषं जनयतीति ॥ ९८ ॥

अथासत्प्रलापः—

असत्प्रलापस्तत्त्वेन हितं यन्नावगम्यते ।

परमार्थतो हितमुपकारपर्यवसायि यद् वचनमविवेचकत्व-मौर्ख्याभ्यां

---

१ कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सवामल(भ्रमर)पद्माघ्रायिणि वारितवामे ! सहस्वेदानीम् ॥

तत्त्वेन हितत्वेन नैवावबुध्यतेऽविवेचकैर्मूर्खैश्च तत् तौ प्रत्ययततोऽसाधुभूतस्य प्रलपनमसत्प्रलापः।

तत्राविवेचकं प्रति यथा रामाभ्युदये द्वितीयेऽङ्के—

"रावणः—प्रायशः श्रुतमेव भवद्भिर्यथा कलत्रमात्रसाधनोऽसौ तापसस्तदपहार एव तावन्निरूप्यताम्। न च कलत्रापहरणाद् ऋते पुरुषस्यापरं परिभवस्थानमस्ति। तत्र मारीचेन साहायकं क्रियमाणमिच्छामि।

मारीचः—स्वामिन्! जीवतो रामस्य परिभव इत्यशक्यमेतत्। न खलु तापस इति तमवज्ञातुमर्हसि(ति) देवः। अन्यदेव वस्त्वन्तरं किमपि तत्।

रावणः—(सक्रोधम्) आः! किं नाम वस्त्वन्तरं तत्? मूढ!

युक्त्यैव क्षत्रबन्धोः परिभवमसमं जीवतः कर्तुमिच्छन्
मायासाहायके त्वं निपुणतर इति प्रार्थये नासमर्थः।
यच्चान्यत् तत्र वज्रप्रहतिमसृणितस्फारकेयूरभाजः
सज्जास्त्रैलोक्यलक्ष्मीहठहरणसहा बाहवो रावणस्य॥"

अत्र मारीचवचनं परमार्थतो हितमपि रावणेन नावगतम्।

मूर्खं प्रति यथा भीमटविरचिते मनोरमावत्सराजे वत्सराजाभ्युदयाशंसी रुमण्वान् पाञ्चालमुच्छेत्तुकामस्तस्य कृतकभृत्यतां श्रितो विश्वासोत्पादनार्थं वत्सराजान्तःपुरमादीप्य यौगन्धरायणप्रमुखानाह—

"कौशाम्बी मम हस्त एव परया शक्त्या मया स्वीकृतः
पञ्चालाधिपतिः प्रभुः स भवतां न ज्ञायते क्वाधुना?।
नन्वादीपित एष मोहितपरानीकेन लावाणको
देवी सम्प्रति रक्ष्यतामयमहं प्राप्तो रुमण्वान् स्वयम्॥"

एतच्च परमार्थतः पाञ्चालोच्छेदपरं यौगन्धरायणेनावबुद्धम्, वासवदत्तया सम्भ्रमकनाम्ना यौगन्धरायणानुचरेण च मौर्ख्यान्नावगतम्।

यथा वा व्यसनिना राजपुत्रेण किं सुखमिति पृष्टे मन्त्रिपुत्रेणोच्यते—

"सर्वदा योऽक्षविजयी सुरासेवनतत्परः।
तस्यार्थानां सुखानां च समृद्धिः करगामिनी॥"

एतदपि मूर्खत्वात् प्रियांशे पाशकविजय–मद्यपानरूपे गृह्यते, न त्विन्द्रियजय–देवताराधनरूपे हितांश इति ।

अन्ये तु बालोत्कण्ठितादीनामसम्बद्धकथाप्रायमसत्प्रलापमिच्छन्ति । यथा—

" एकं त्रीणि नवाष्ट सप्त षडिति व्यालुप्तसङ्ख्याक्रमा
वाचः क्रौञ्चरिपोः शिशुत्वविकलाः श्रेयांसि पुष्णन्तु वः । "

यथा वा रघुविलासे सीताविरहितो रामः—

" अरण्ये मां त्यक्त्वा हरिण ! हरिणाक्षी क्व नु गता ?
पराभूतो दृष्ट्वा कथयसि न चेन्मा स्म कथयः ।
अरे क्रीडाकीर ! त्वमपि वहसे कामपि रुषं
यदेवं तूष्णीकामनुसरसि वाचंयम इव ॥ " इति ॥

अथ वाक्केली—

प्रश्नोत्तरं तु वाक्केली हास्या वाक् प्रतिवागपि ॥ ९९ ॥

प्रश्नस्य प्रश्नयोः प्रश्नानां वोत्तरं प्रश्नोत्तरम् । सहासा च्छेकोक्तिप्रत्युक्तिर्वा । द्वयमप्येतद् वचनक्रीडारूपत्वाद् वाक्केली । यथा—

" नदीनां मेघविगमे का शोभा प्रतिभासते ? ।
बाह्यान्तरा विजेतव्या के नाम कृतिनाऽरयः ? ॥ "

अत्रारय इत्येकत्र रयाभावोऽपरत्र शत्रव इत्येकं प्रतिवचनम् । एवं बहूनामपि द्रष्टव्यम् । एतत् प्रश्नोत्तरम् ॥

छेकोक्ति–प्रत्युक्तिर्यथा—

कोऽयं द्वारि हरिः प्रयाह्युपवनं शाखामृगस्यात्र किं ?
कृष्णोऽहं दयिते ! बिभेमि सुतरां कृष्णात् पुनर्वानरात् ।
मुग्धेऽहं मधुसूदनो व्रज लतां तामेव तन्वीमलं
मिथ्या सूचयसीत्युपेत्य घनिकां ह्रीतो हरिः पातु वः ॥ "

केचित् तु साकाङ्क्षस्य वाक्यस्य विनिवर्तनं वाकेलीमधीयते । यथोत्तरचरिते—

" त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमतः परेण ? ॥ " ॥ ९९ ॥

अथ नालिका—

हास्याय वञ्चना नाली

परविप्रतारणकारि यदुत्तरं हास्याय हास्यनिमित्तं निगूढार्थत्वाद् भवति सा नाली व्याजरूपा प्रणालिका । यथा रत्नावल्यां सागरिका चित्रफलहकार्थमागता कदलीगृहे वत्सराजं दृष्ट्वा बहिः स्थिता सुसङ्गतयोच्यते—

" सहि ! जस्स कए तुवं एत्थ आगदा सो एत्थ य्येव चिट्ठदि ।

सागरिका—( सकोपमिव ) सहि ! कस्स ?

सुसङ्गता—( सहासम् ) अयि अप्पसंकिदे ! णं पउत्तमहूसवे चित्तफलहयस्स । "

केचित् तु हास्यहेतुनोपेतां(तां) निगूढार्थरूपां प्रहेलिकां नालीं मन्यन्ते । यथा बालिकावञ्चितके पारिपार्श्वकः—

" तपनीयोत्क(ज्ज्व)लकरकं कुवलयरुचि भासमानमाकाशे ।
तेजोमयं दिनकराद्द्वितीयमाचक्ष्व मे भूतम् ॥ "

अत्र निगूढो नारदलक्षणोऽर्थः सूत्रधारेणास्मिन्नेव श्लोके द्वितीयमेनं मुनिं पश्येति चतुर्थपादान्यथाकरणेन व्याख्यात इति ।

---

१ सखि ! यस्य कृते त्वमत्रागता सोऽत्रैव तिष्ठति । २ सखि ! कस्य ?

३ अयि आत्मशङ्किते ! ननु प्रवृत्तमदनमहोत्सवस्य चित्रफलकस्य ।

## अथ मृदवम्—

व्यत्ययो गुणदोषयोः । मृदवम्

गुणानां दोषत्वं दोषाणां च गुणत्वं येनोत्तरेण व्यत्ययो विपर्यासः क्रियते तन्मृदा परपक्षमर्दनेन स्वपक्षमवति रक्षतीति मृदवम् । गुणस्य दोषीकरणं यथा वेणीसंहारे द्वितीयेऽङ्के—

"जयद्रथमाता—जाद ! ते खु बंधुवधामरिसुद्दीविदकोवा समरे अणवेक्खियसरीरा परिकमिस्संति ।

राजा—( सोपहासम् ) एवमेतत् । सर्वजनप्रसिद्धमेवामर्षित्वं पाण्डवानाम् । पश्य ।

दुस्ताकृष्टविलोलकेशवसना दुःशासनेनाज्ञया
    पाञ्चाली मम राजचक्रपुरतो गौर्गौरिति व्याहृता ।
तस्मिन्नम्ब ! स किं न का(गा)ण्डिवव(ध)रो नासीत् पृथानन्दनो
    यूनः क्षत्रियवंशजस्य कृतिनः क्रोधास्पदं किं न तत् ? ॥ "

अत्र धनुर्धरत्वादयो गुणा दोषीकृताः ।

यथा नलविलासे—

" राजा—देवि ! उपालभ्यसेऽभ्यन्तरपरिजनापराधेन ।

दमयन्ती—कहं विय ?

राजा—

वक्त्रेन्दुः स्मितमातनोदधिगते दृष्टी विकासश्रियं
    बाहू कण्टककोरकाण्यबिभृतां प्रापा शिरो गौरवम् ।
किं नाङ्गानि तवातिथेयमसृजन् स्वस्वापतेयोचितं
    सम्प्राप्ते मयि नैतदुज्झति कुचद्वन्द्वं पुनः स्तब्धताम् ॥ "

अत्र स्तब्धता स्तनगुणो दोषीकृतः ।

अपि च । यथाऽस्मदुपज्ञे सुधाकलशे—

---

१ जात ! ते खलु बन्धुवधामर्षोद्दीप्तकोपा समरेऽनपेक्षितशरीराः परिक्रमिष्यन्ति । २ कथमिव ?

" लच्छी गिहीण भूसा अपत्तविज्जाण सा पुणो गरुई ।
तत्तो पढेज्ज विज्जं आजम्मदुहंकरं सकन्नो ॥ "

अत्र निर्वेदाद् विबुधैर्विद्या गुणोऽपि दोषीकृतः ।
दोषस्य गुणीकरणं यथा वेणीसंहारे कञ्चुकिना सह विवादे—

" दुर्योधनः—सूक्तमिदं कस्यापि ।

गुप्तः साक्षान् महानल्पः स्वयमन्येन वा कृतः ।
करोति महतीं प्रीतिमपकारोऽपकारिणाम् ॥

येनाद्य द्रोण-कर्ण-जयद्रथादिनिहतमभिमन्युमुपस्तुतेद्ध(श्रुत्योच्छ्व)सितमिद(व) नश्चेतसा । "

अत्र क्षत्रधर्मं त्यक्त्वाऽभिमन्युर्निहत इत्ययं दोषः स्वप्रीतिहेतुत्वेन गुणीकृतः ।

यथा वा नलविलासे—

" सर्वेषामपि सन्ति वेश्मसु कुतः कान्ताः कुरङ्गीदृशो ?
न्यायार्थी परदारविप्लवकरं राजा जनं बाधते ।
आज्ञां कारितवान् प्रजापतिमपि स्वां पञ्चबाणस्ततः
कामार्तः क्व जनो व्रजेत् परहिताः पण्याङ्गनाः स्युर्न चेत् ॥ "

अत्र पण्यस्त्रीत्वं दोषः शृङ्गारपुष्ट्यर्थं गुणीकृतः ।

अपि च । यथा सुधाकलशे—

" तोण नमो निग्गुणसेहराण गुणिसलहिज्जजम्माणं ।
निअगुणरिहलत्तमवा सिविणे वि न जाण अरईउ ॥ "

अत्र निर्वेदाद् गुणिभिर्निर्गुणत्वं दोषोऽपि गुणीकृतः ॥

---

१ लक्ष्मीर्गृहिणां भूषाऽप्राप्तविद्यानां सा पुनर्गुर्वी ।
ततः पठेद् विद्यामाजन्मदुःखदां सकर्णः ॥

२ तेभ्यो नमो निर्गुणशेखरेभ्यो गुणिश्लाघ्यमानजन्मभ्यः ।
निजगुणरहितत्वमतः स्वप्नेऽपि न येषामरतयः ॥

उभयमेकत्र यथा—

" सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः
सर्वत्रैव जनापवादचकितास्तिष्ठन्ति दुःखं सदा।
अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो
युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः॥ "

अत्र सत्त्वं गुणोऽपि दोषीकृतः, प्राकृतत्वं तु दोषोऽपि गुणीकृत इति॥

अथोद्घात्यकम्—

परस्परं स्यादुद्घात्यं गूढभाषणम्॥ १००॥

पृच्छक–प्रतिवक्त्रोरन्योन्यं गूढार्थयुक्ति–प्रत्युक्तात्मकं भाषणम् उद्घाते प्रश्नात्मके साधूद्घात्यम्। यदा प्रष्टा विवक्षितोत्तरदानसमर्थः, किन्तु यन्ममाभिप्रेतं तद् युक्तमयुक्तं वेत्यभिसन्धाय पृच्छति, प्रतिवक्ता चोचितमभिधत्ते तदोद्घात्यमित्यर्थः।

यथा पाण्डवानन्दे सूत्रधार–पारिपार्श्विकयोरुक्ति–प्रत्युक्ती—

" का भूषा बलिनां क्षमा परिभवः को यः स्वकुल्यैः कृतः
किं दुःखं परसंश्रयो जगति कः श्लाघ्यो य श्चा(आ)श्रीयते।
को मृत्युर्व्यसनं शुचं जहति के यैर्निर्जिताः शत्रवः
कैर्विज्ञातमिदं विराटनगरच्छन्नस्थितैः पाण्डवैः॥" इति॥१००॥

अथावलगितम्—

तच्चावलगितं सिद्धिः कार्यस्यान्यमिषेण या।

विवक्षितप्रयोजनस्यान्यकार्यकरणव्याजेन सम्पत्तिर्यत्र तदन्यकार्यावलगनादवलगितम्। यथोत्तरचरिते समुत्पन्नवनविहारदोहदायाः सीताया दोहदकार्यमिषेण जनापवादादरण्ये त्यागः।

केचित् तु पात्रान्तरे स्वव्यापारं निक्षिप्य यत् कार्यान्तरकरणं तदवलगितमित्याहुः। यथा कृत्यारावणस्यामुखे—

" सूत्रधारः–( निःश्वस्य ) आर्ये! ननु ब्रवीमि।

वाक्प्रपञ्चैकसारेण निर्विशेषाल्पवृत्तिना ।
स्वामिनेव नटि(ट)त्वेन निर्विण्णाः सर्वथा वयम् ॥

तद् गच्छतु भवती पुत्रं मित्रं वा कमपि पुरस्कृत्य क्रमागतामिमां कुजीविकामनुवर्तयितुम् । " ततः क्रमादाह—

" परिग्रहोरुग्राहौघाद् गृहसंसारसागरात् ।
बन्धुस्नेहमहावर्तादिदमुत्तीर्य गम्यते ॥ "

अत्र स्वजीविकां दारेषु निक्षिप्य परलोकहेतुकार्यकरणं स्वयमाश्रितम् ।

अपरे तु—" प्रस्तुतेऽन्यस्मिन् कार्ये यदन्यत् स्वयमेव सिध्यति तदवलगितम् । यथा छलितरामे—

" रामः—लक्ष्मण ! तातवियुक्तामयोध्यां विमानस्थो नाहं प्रवेष्टुं शक्नोमि, तदवतीर्य गच्छामि ।

कोऽपि सिंहासनस्याधः स्थितः पादुकयोः पुरः ।
जटावानक्षवलयी चामरी च विराजते ॥ "

अत्र भरतदर्शनकार्यान्तरस्यैवमेव सिद्धिरिति ।

अथावस्पन्दितम्—

स्वेच्छोक्तस्यान्यथाऽऽख्यानं यदवस्पन्दितं तु तत् ॥ १०१ ॥

स्वेच्छया वर्णनाभिप्रायमात्रेणोक्तस्यान्यथाऽऽख्यानमन्यार्थकथनरूपं यत् तदवस्पन्दितं चक्षुःस्पन्दनादिवदन्तर्गतसूचनीयसम्भवात् । यथा वेणीसंहारे—

" सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥ "

अत्र स्वेच्छया शरद्वर्णनाय हंसवर्णनं सूत्रधारेणोक्तम् । एतद् पारिपार्श्विकेन धृतराष्ट्रसुतानां दुर्योधनादीनाममङ्गलार्थकथनेनान्यथाऽऽख्यातम् ।
यथा वा छलितरामे—

"सीता-जादे ! पब्भाए तुम्मेहिं अउज्झाए गंतव्वं । सो अ राया विणएण पणमिदव्वो।

लवः-अम्ब ! किमावाभ्यां राजोपजीवकाभ्यां भाव्यम् ?

सीता-सो खु तुम्हाणं पिदा।

लवः-किमावयो रघुपतिः पिता ?

सीता-( साशङ्कम् ) ण खु तुम्हाणं, सयलाइ य्येव पुहवीए।" इति।

एतानि च त्रयोदश वीथ्यङ्गानि सर्वरूपकाणां सर्वसन्धिषु निबन्धनीयानि। सर्वसन्धिसाधारण्यादामुखेऽपि भावाच्च सन्ध्यङ्गेभ्यः पृथगुक्तानीति ॥ १०१ ॥

अथ व्यायोगादौ रूपकान्तरे सामान्यनाटकलक्षणातिदेशमाह—

स्वा स्वा वैशेषिकीं हित्वा सन्धि-वृत्त्यादिका स्थितिम्।
सामान्या नाटकस्यान्या विज्ञेया रूपकान्तरे ॥ १०२ ॥

वैशेषिकीमसाधारणीं 'सन्धि-वृत्त्यादिकाम्'इति आदिशब्दादङ्कपरिमाण-रस नायकादिपरिग्रहः। 'अन्या'इति पात्रोक्तिवैचित्र्याङ्कोपाय-दशा-सन्ध्यङ्गलक्षणनायकादिप्रकृत्यौचित्यादिका स्थितिर्व्यायोगादौ रूपकान्तरे नाटकप्रतिपादिता ज्ञातव्या। प्रकरणे तु नाटकसमानत्वमुक्तमेव। नाटिका-प्रकरण्योः पुनर्नाटक-प्रकरणान्तर्भूतत्वान्न किंचित् पृथग् वाच्यमिति सर्वं समञ्जसम् ॥ १०२ ॥

इति श्रीरामचन्द्र-गुणचन्द्रविरचितायां स्वोपज्ञनाट्यदर्पण-विवृतौ द्वितीयः प्रकरणाद्येकादशरूपनिर्णयो विवेकः समाप्तः ॥ २ ॥

---

१ जात ! प्रभाते युवाभ्यामयोध्यायां गन्तव्यम्। स च राजा विनयेन प्रणन्तव्य.।

२ स खलु युवयो पिता। ३ न खलु युवयोः, सकलाया एव पृथ्व्या ।

वाक्प्रपञ्चैकसारेण निर्विशेषाल्पसूचिना ।
स्वामिनेव नटि(ट)त्वेन निर्विण्णाः सर्वथा वयम् ॥

तद् गच्छतु भवती पुत्रं मित्रं वा कमपि पुरस्कृत्य क्रमागतामिमां कुजीविकामनुवर्तयितुम् ।" ततः क्रमादाह—

"परिग्रहोरुग्राहौघाद् गृहसंसारसागरात् ।
बन्धुस्नेहमहावर्तादिदमुत्तीर्य गम्यते ॥"

अत्र स्वजीविकां दारेषु निक्षिप्य परलोकहेतुकार्यकरणं स्वयमाश्रितम् ।

अपरे तु—"प्रस्तुतेऽन्यस्मिन् कार्ये यदन्यत् स्वयमेव सिध्यति तदवलगितम् । यथा छलितरामे—

"रामः—लक्ष्मण ! तातवियुक्तामयोध्यां विमानस्थो नाहं प्रवेष्टुं शक्नोमि, तदवतीर्य गच्छामि ।

कोऽपि सिंहासनस्याधः स्थितः पादुकयोः पुरः ।
जटावानक्षवलयी चामरी च विराजते ॥"

अत्र भरतदर्शनकार्यान्तरस्यैवमेव सिद्धिरिति ।

अथावस्पन्दितम्—

स्वेच्छोक्तस्यान्यथाऽऽख्यानं यदवस्पन्दितं तु तत् ॥ १०१ ॥

स्वेच्छया वर्णनाभिप्रायमात्रेणोक्तस्यान्यथाऽऽख्यानमन्यार्थकथनरूपं यत् तदवस्पन्दितं चक्षुःस्पन्दनादिवदन्तर्गतसूचनीयसम्भवात् । यथा वेणीसंहारे—

"सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥"

अत्र स्वेच्छया शरद्वर्णनाय हंसवर्णनं सूत्रधारेणोक्तम् । एतत् पारिपार्श्विकेन धृतराष्ट्रसुतानां दुर्योधनादीनाममङ्गलार्थकथनेनान्यथाऽऽख्यातम् । यथा वा छलितरामे—

आमुख-प्ररोचनयोरुत्थितः सम्भवो यतः प्रायो बाहुल्येन संस्कृतेन सर्वरसैश्च दीप्ता। प्ररोचया(ना)मुखयोरन्यत्रापि च रूपकैकदेशे प्राकृतादिपाठेन भारतीदर्शनात् प्रायोग्रहणमर्थवत्। सर्वरूपकभावित्वाद् रसानां च वाग्जन्यत्वात् सर्वरसात्मकत्वम्। ये तु भारत्यां बीभत्स-करुणौ प्रपन्नास्तैः सर्वरसवीथीप्रधानशृङ्गारवीरभाण-प्रधानहास्यप्रहसनानि स्वयमेव भारत्यामेव वृत्तौ नियन्त्रितानि नावेक्षितानि। 'वाचि' वाग्व्यापारविषये वाग्व्यापारात्मिकेत्यर्थः। भारती वाग्व्यापारविषय एवेत्ययोगव्यवच्छेदः। तेन वाचिकाभिनयात्मिका सात्वत्यपि भवति। वृत्त्यन्तराणि तु सर्वथाऽभिनयविषयाणि। भारतीरूपत्वाद् व्यापारस्य भारतीति॥ १०४॥

अथ भारतीसम्भवमामुखं लक्षयति—

विदूषक-नटी-मार्षैः प्रस्तुताक्षेपि भाषणम्।
सूत्रधारस्य वक्रोक्त-स्पष्टोक्तैर्यत् तदामुखम्॥ १०५॥

पारिपार्श्विक एव विदूषकवेषधारी विदूषकः। मार्षः पारिपार्श्विकः। विदूषक-नटी-मार्षैर्व्यस्तैः समस्तैर्वा सह सूत्रधारस्य रङ्गसूत्रणाकर्तुः सूत्रधारगुणानुकारस्य वा नाट्यार्थस्थापनाकर्तुः स्थापकस्य प्रस्तुतस्य काव्यार्थस्याक्षेपि उपस्थापकं भाषणं वक्रोक्तैः साक्षाद् विवक्षितार्थस्याप्रतिपादकैः, स्पष्टोक्तैः साक्षाद् विवक्षितार्थस्य प्रतिपादकैश्च यत् स्वस्याभिप्रायोत्कीर्तनं तदामुखम्। 'आङ् मर्यादायाम्' तेन मुखसन्धिं सम्प्राप्य निवर्तते। 'ईषदर्थे वा' तत ईषन्मुखं मुखसन्धिसूचकत्वादारम्भः। प्रस्तावनाशब्देनाप्येतदुच्यते। इदं तावदामुखं नाट्यात् पृथग्भूतम्। तत्र कदाचिद् रङ्गसूत्रयितैवामुखार्थमनुतिष्ठति। तथा च दृश्यते—नान्द्यन्ते सूत्रधारः। नान्द्यन्त इत्यवयवे समुदायोपचारात् पूर्व(र्वे)रङ्गान्ते इति द्रष्टव्यम्। नान्दी हि पूर्व(र्व)रङ्गस्याङ्गम्। अत्र च पक्षे आमुखार्थस्य सूत्रधारविषयत्वान्मुखसन्धेः प्रभृति कवेर्व्यापारः। कदाचित् तु सनान्दीकं रङ्गमनुष्ठाय विश्रान्ते सूत्रधारे तत्तुल्यगुणाकृतिः स्थापक आमुखमनुतिष्ठति। तथा चानङ्गवत्यां नाटिकायां दृश्यते—'पूर्वरङ्गान्ते स्थापकः'। अत्र च पक्षे आमुखानुष्ठानेऽपि कवेर्व्यापारः, स्थापकस्य सूत्रधारानुकारिणो रामानुकारिणो नटस्येव कविनैव प्रवेशात्। 'वक्रोक्त-' इति

# अथ तृतीयो विवेकः ।

---

अथ रूपकोद्देशश्लोकोद्दिष्टाः क्रमप्राप्ता वृत्तयः प्रपञ्च्यन्ते—

भारती सात्वती कैशिक्यारभटी च वृत्तय ।
रसभावाभिनयगाश्चतस्रो नाट्यमातर ॥ १०३ ॥

पुरुषार्थसाधको विचित्रो व्यापारो वृत्तिः। रस-भावाभिनया वक्ष्यमाणास्तांस्तन्मयत्वेन गच्छन्ति । रस-भावाभिनयसम्भिन्नो हि सर्वो नाट्ये व्यापारः । 'चतस्रः' इति चतुर्भेदत्वमन्यतमचेष्टांशप्राधान्यविवक्षया, अपरथाऽनेकव्यापारसंवलितमेकमेव वृत्तितत्त्वम् । न नाम प्रबन्धेषु व्यापारान्तरासंवलितः कोऽप्येकाकी कायिको वाचिको मानसो वा व्यापारो लक्ष्यते । कायिकयो हि व्यापृतयो मानसैर्वाचिकैश्च व्यापारैः सम्भिद्यन्ते । शब्दोल्लिखितं मनःप्रत्य[यं] विना रङ्गकस्य कायव्यापारपरिस्पन्दस्याभावात् । वाचिकयो मानस्यश्च कायपरिस्पन्दाविनाभाविन्य एव, ताल्वादिव्यापाराभावे वचनानुच्चारणात्, प्राणादिरूपकायपरिस्पन्दाभावे मनोव्यापृत्यनुपलक्षणाच्च । मनःशून्यश्च व्यापारः कायिको वाचिको वाऽरञ्जकत्वादनिबन्धनीय एव । विदूषकोऽपि च हास्यार्थं बुद्धिपूर्वकमेव विसंस्थुलं विचेष्टते । अतः सङ्कीर्णत्वेऽप्यंशप्राधान्यापेक्षया वृत्तयश्चतस्रः । नाट्यस्याभिनेयकाव्यस्य मातर इव मातरः । आभ्यो हि वर्णनीयत्वेन कविहृदये व्यवस्थिताभ्यः काव्यमुत्पद्यते । 'नाट्य-' इति च प्रस्तावापेक्षम्, तेनानभिनेयेऽपि काव्ये वृत्तयो भवन्त्येव; न हि व्यापारशून्यं किञ्चिद् वर्णनीयमस्ति । रङ्गानन्तरं च नाट्यमिति रङ्गस्य व्यापारशून्यत्वेनावृत्तित्वेऽपि न कश्चिद् दोषः । मूर्छादौ तु व्यापाराभावेन वृत्त्यभावेऽपि न नाट्यस्य वृत्तिमयत्वहानिः, बाहुल्यापेक्षया वृत्तिमयत्वस्याभिमतत्वादिति ॥ १०३ ॥

तत्र भारत्या लक्षणमाह—

सर्वरूपकगामिन्यामुख-प्ररोचनोचिता ।
प्राय संस्कृतनिःशेषपाठ्या वाचि भारती ॥ १०४ ॥

सर्वरूपकेष्वभिनेयानभिनेयेषु गमनशीलादिप्रायण्यान्मयन्त्वात् वर्णनाया

" तवास्मि गीतरागेण हारिणा प्रसभं हृतः।
एष राजेव दुष्क(ष्य)न्तः सारङ्गेणातिरंहसा ॥ "

अत्र नाट्यामुखयोः सम्बन्धनार्थं कविना भाविप्रवेशस्य पात्रस्य युक्त्या नामग्रहणम्। पूर्वत्र तु समानविशेषणबलान्नामाय(ग)तमित्यनयोर्विशेष इति।

एषां च नाट्यपात्रप्रवेशप्रकाराणामन्यतम एवैकश्चमत्कारकारी निबन्धनीयः। अन्यथा पात्रप्रवेशग्रन्थबाहुल्येन प्रस्तुतार्थविघातः स्यादिति। शब्दव्यापारबाहुल्याच्च भारत्यंशभूतत्वमस्य। एवं प्ररोचनायाः पूर्वरङ्गाङ्गभूताया अपीति। पात्रप्रवेशस्य पूर्वो भाग आमुखम्, उत्तरः पुनर्नाट्यमिति।

अथ प्ररोचनां व्याचष्टे—

पूर्वरङ्गे गुणस्तुत्या सम्यौन्मुख्यं प्ररोचना ॥ १०६ ॥

पूर्वं नाट्यात् प्रथमं गीत-ताल-वाद्य-नृत्तानि नाट्यादिकं च पाठ्यं व्यस्तं समस्तं च प्रयुज्यते यत्र रङ्गे रञ्जनहेतौ नाट्यशालायां स पूर्वरङ्गः। अस्य च पूर्वरङ्गस्य प्रत्याहारादीन्यासारितान्तानि नवान्तर्जवनिकं गीतकादीनि प्ररोचनान्तानि च दश बहिर्जवनिकमङ्गानि प्रयोज्यानि पूर्वाचार्यैर्लक्षितानि। अस्माभिस्तु स्वतो लोकप्रसिद्धत्वात् तन्न्यासक्रमस्य निष्फलत्वाद् विविधदेवतापरितोषरूपस्य तत्फलस्य च श्रद्धालुप्रतारणमात्रत्वादुपेक्षितानि। प्ररोचना तु पूर्वरङ्गाङ्गभूताऽपि नाट्ये प्रवृत्तौ प्रधानमङ्गमिति लक्ष्यते। तत्र पूर्वरङ्गे गुणस्तुत्या प्रस्तुतप्रबन्धार्थस्य प्रीत्यादिहेतुत्वप्रशंसनेन सामाजिकानां श्रवणावलोकनोत्साहोत्पादनं प्रकृतोऽर्थः प्रकर्षेण रोच्यते उपादेयतया ध्रियतेऽनयेति प्ररोचना। यथा क्षीरस्वामिविरचितेऽभिनवराघवे—

" स्थापकः—( सहर्षम् ) आर्ये! चिरस्य स्मृतम्।

अस्त्येव राघवमहीनकथापवित्रं
काव्यं प्रबन्धघटनाप्रथितप्रथिम्नः।
भट्टेन्दुराजचरणाब्जमधुव्रतस्य
क्षीरस्य नाटकमनन्यसमानसारम् ॥ "

च वीथ्यङ्गानामेवंविधरूपाणां व्याहारादीनां सद्भावमाहेति। स्पष्टोक्तिस्त्वेवं यथा–'नागानन्दे नाटयितव्ये किमित्यकारणमेव रुद्यते?' इति ॥ १०५ ॥

अथामुखाङ्गभूतं नाट्यपात्रप्रवेशविधिमाह—

वाक्यार्थ-समयाह्वानैर्भावोक्तैः पात्रसङ्क्रमः ।

समयः कालः। आह्वानं संज्ञा। एतैः सूत्रधार-स्थापकाभ्यामुक्तैर्हेतुभूतैः पात्रस्य मुख्यनायकादिभूमिकाधारिणो नटादिलोकस्य सङ्क्रमः प्रवेशः। वाक्यार्थयोरनूद्यमानतया पात्रप्रवेशहेतुत्वम्, समयाह्वानयोस्तु सूचकत्वेनेति।

वाक्येन यथा सत्यहरिश्चन्द्रे—

"सत्त्वैकतानवृत्तीनां प्रतिज्ञातार्थकारिणाम्।
प्रभविष्णुर्न देवोऽपि किं पुनः प्राकृतो जनः? ॥"

एतदेव पठन् हरिश्चन्द्रः प्रविशति।

अर्थेन यथा वेणीसंहारे—

"निर्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥"

इत्यस्य वाक्यस्य छन्दसा ग्रथितस्य चतुर्थपादेन 'स्वस्था भवन्ति मयि जीवति धार्त्तराष्ट्राः' इत्यनेनार्थं गृहीत्वा भीमः।

समयेन यथा छलितरामे—

"आसादितप्रकटनिर्मलचन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकान्तः।
उत्खाय गाढतमसं घनकालमुग्रं
रामो दशास्यमिव सम्भृतबन्धुजीवः ॥"

अत्र समानविशेषणे रामशब्दकीर्तनाच्च रामप्रवेशसूचा।

आह्वानेन यथा अभिज्ञानशकुन्तले—

" तवास्मि गीतरागेण हारिणा प्रसभं हृतः ।
एष राजेव दुष्क(ष्य)न्तः सारङ्गेणातिरंहसा ॥ "

अत्र नाट्यामुखयोः सम्बन्धनार्थं कविना भाविप्रवेशस्य पात्रस्य युक्त्या नामग्रहणम् । पूर्वत्र तु समानविशेषणबलान्नामाय(ग)तमित्यनयोर्विशेष इति ।

एषां च नाट्यपात्रप्रवेशप्रकाराणामन्यतम एवैकश्चमत्कारकारी निबन्धनीयः । अन्यथा पात्रप्रवेशग्रन्थबाहुल्येन प्रस्तुतार्थविघातः स्यादिति । शब्दव्यापारबाहुल्याच्च भारत्यंशभूतत्वमस्य । एवं प्ररोचनायाः पूर्वरङ्गाङ्गभूताया अपीति । पात्रप्रवेशस्य पूर्वो भाग आमुखम्, उत्तरः पुनर्नाट्यमिति ।

अथ प्ररोचनां व्याचष्टे—

पूर्वरङ्गे गुणस्तुत्या सम्यौन्मुख्यं प्ररोचना ॥ १०६ ॥

पूर्वं नाट्यात् प्रथमं गीत-ताल-वाद्य-नृत्तानि नाट्यादिकं च पाठ्यं व्यस्तं समस्तं च प्रयुज्यते यत्र रङ्गे रञ्जनहेतौ नाट्यशालायां स पूर्वरङ्गः । अस्य च पूर्वरङ्गस्य प्रत्याहारादीन्यासारितान्तानि नवान्तर्जवनिकं गीतकादीनि प्ररोचनान्तानि च दश बहिर्जवनिकमङ्गानि प्रयोज्यानि पूर्वाचार्यैर्लक्षितानि । अस्माभिस्तु स्वतो लोकप्रसिद्धत्वात् तन्न्यासक्रमस्य निष्फलत्वाद् विविधदेवतापरितोषरूपस्य तत्फलस्य च श्रद्धालुप्रतारणमात्रत्वादुपेक्षितानि । प्ररोचना तु पूर्वरङ्गाङ्गभूताऽपि नाट्ये प्रवृत्तौ प्रधानमङ्गमिति लक्ष्यते । तत्र पूर्वरङ्गे गुणस्तुत्या प्रस्तुतप्रबन्धार्थस्य प्रीत्यादिहेतुत्वप्रशंसनेन सामाजिकानां श्रवणावलोकनोत्साहोत्पादनं प्रकृतोऽर्थः प्रकर्षेण रोच्यते उपादेयतया ध्रियतेऽनयेति प्ररोचना । यथा क्षीरस्वामिविरचितेऽभिनवराघवे—

" स्थापकः—( सहर्षम् ) आर्ये ! चिरस्य स्मृतम् ।

अस्त्येव राघवमहीनकथापवित्रं
काव्यं प्रबन्धघटनाप्रथितप्रथिम्नः ।
भट्टेन्दुराजचरणाब्जमधुव्रतस्य
क्षीरस्य नाटकमनन्यसमानसारम् ॥ "

यथा वा रघुविलासे—

" सीतां काननतो जहार विहितव्याजः पुरा रावण-
स्तं व्यापाद्य रणेन तां पुनरथो रामः समानीतवान् ।
एतस्मै कविसूक्तिमौक्तिकमणिस्त्वालयम्मसे भूर्भुवः-
स्वर्व्यामोहनकार्मणाय सुकथारत्नाय नित्यं नमः ॥"

यथा वा नलविलासे—

" कविः काव्ये रामः सरसवचसामेकवसति-
र्नलस्येदं हृद्यं किमपि चरितं धीरललितम् ।
समादिष्टो नाट्ये निखिलनटमुद्रापटुरहं
प्रसन्नः सभ्यानां कटरि! भगवानद्य स विधिः ॥" इति ॥

इयं परोचना पूर्वरङ्गात् प्रथमं पश्चाच्च निबध्यते । निबन्धे चास्या नावश्यम्भावनियम इति ॥ १०६ ॥

अथोद्देशप्राप्तां सात्वतीं लक्षयति—

सात्वती सत्त्व-वागङ्गाभिनेयं कर्म मानसम् ।
सार्जवाधर्ष-मुद्-धैर्य-रौद्र-वीर-शमाद्भुतम् ॥ १०७ ॥

सत् सत्त्वं प्रकाशस्तद् यत्रास्ति तत् सत्वन्मनस्तत्र भवा सात्वती संज्ञाशब्दत्वेन बाहुलकात् स्त्रीत्वम् । सत्त्व-वागङ्गाभिनेयं सत्त्व-वागङ्गाभिनेयैर्ग्राह्यम् । सत्त्वाभिनय-वागभिनयाङ्गाभिनययुक्तं मानसं कर्म सात्वतीत्यर्थः । अभिनयत्रयाभिधानेऽपि मानसव्यापारस्य सत्त्वप्रधानत्वात् सत्त्वाभिनय एवात्र प्रधानमितरौ गौणौ । अत एव सत्त्वशब्दः प्रथममुपात्तः । आर्जवमकौटिल्यम् । आधर्षो वाचा न्यक्कारः । मुद् हर्षः । धैर्यं व्यसनेऽप्यकातर्यम् । एतै रौद्रादिभिश्च सह वर्त्तमानो मनोव्यापारः सात्वती । आर्जवस्योपादानादत्र कपटाभावः । आधर्षव्यापनादुद्धतपुरुषसद्भावः । मुत्प्रतिपादनाच्छोककरुण-निर्वेदाभावः । धैर्याभिधानात् स्त्र्यादिसङ्गमौत्सुक्याभावश्चाभिहितो भवति । रौद्ररसयोगेऽपि केषांचित् सत्त्वं प्रकाशरूपं दृश्यत एवेति रौद्रोपादानम् । वीररसश्चात्र युद्ध-दान-दयावीरादिरूपः सत्त्वबाहुल्याद् गृह्यते । 'शम-'इति

च शमः स्थायिभावः, शान्तो रसो द्रष्टव्यः, अरिषड्वर्गजयस्य सत्त्वैकनिबन्धनत्वात् । अद्भुतोऽप्यन्यसत्त्वावलोकनात् सात्त्विकानां दृश्यत एवेति । इदं च मानसं कर्म विचित्राभिर्गम्भीरोक्तिभिः प्रारब्धकार्यापरित्यागात्, कार्यान्तरपरिग्रहेण सङ्ग्रामाय परोत्साहनेन सामादिप्रयोग-दैवादिना अरिसङ्घावभेदजननेनान्यैश्च बहुभिः प्रकारैर्लक्ष्यत इति ॥ १०७ ॥

अथ कैशिकी—

कैशिकी हास्य-शृङ्गार-नाट्य-नर्मभिदात्मिका ।

अतिशायिनः केशाः सन्त्यासामिति केशिकाः स्त्रियः 'स्तनकेशवतीत्वं हि स्त्रीणां लक्षणम्' तत्प्रधानत्वात् तासामियं कैशिकी । हास्य-शृङ्गाराभ्यां स्त्रीबाहुल्य-विचित्रप्रकारनेपथ्य-कामव्यवहाराणां सद्भावमाह । नाट्यं नृत्त-गीत-वादित्राणि । अग्राम्य इष्टजनावर्जनरूपो वाग्-वेष-चेष्टाभिः परिहासो नर्म ।

वाचा यथा—

"पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥"

यथा वा सत्यहरिश्चन्द्रे—

"राजा—( विहस्य ) विहङ्गराज ! निःशेषवेश्याचक्रवर्तिनीमेनां लम्बस्तनीमुपश्लोकय ।

शुकः—पुण्यप्रागल्भ्यलभ्याय वेश्यापण्याय मङ्गलम् ।
यत्र प्रतीपाः शास्त्रस्य कामादर्थप्रवृत्तयः ॥"

वेषेण यथा नागानन्दे विदूषक-शेखरकव्यतिकरे ।

चेष्टानर्म यथा मालति(वि)काग्निमित्रे—"निपुणिका विदूषकस्योपरि सर्पविभ्रमकारि दण्डकाष्ठं पातयति ।" इति ।

एतच्च क्वचिन्मानात् क्वचिद् हास्यात् क्वचिद् शृङ्गारहास्यात् क्वचिद् भयहास्यात् क्वचिद् अपराधप्रियप्रतिभेदनात् क्वचिद् पूर्वनायिकाप्रतिभया-दित्याद्यनेकधा द्रष्टव्यम् ।

अत्र शृङ्गाररसेन रत्याख्यो मानसो हास्येन नर्मभेदैश्च वाचिको नाट्येन कायिकश्च व्यापारः सङ्गृहीत इति व्यापारत्रयसङ्ग्रहात्मिकेयमिति ॥

अथारभटी—

आरभट्यनृत–द्वन्द्व–छद्म–दीप्तरसान्विता ॥ १०८ ॥

आरेण प्रतोदकेन तुल्या भटा उद्धताः पुरुषा आरभटास्ते सन्त्यस्यामिति 'ज्योत्स्नादित्वादाणि' आरभटी। अनृतमसत्यम्। द्वन्द्वयुद्धमनेकप्रकारम्। छद्म वञ्चनाहेतुः प्रयोगः, अनेनेन्द्रजाल-पुस्तप्रयोग–च्छेद्य–भेद्यादिग्रहः। दीप्ता रसा रौद्रादयः औद्धत्यावेगादिहेतवः। अत्रानृतादिभिः विचित्रनेपथ्य–किलिञ्जहस्तिप्रयोग–मायाशिरोदर्शनादिकम्। भय–हर्षातिशयाकुलितपात्रप्रवेशः। पूर्वनायकावस्थायाः परित्यागेन नायकावस्थान्तरग्रहोऽवस्कन्दाग्न्यादिकृतविद्रवादिकं विविधस्थायि-व्यभिचारिभावयुक्तं प्रसङ्गागतकार्यादिकं बाहुयुद्ध–शस्त्रप्रहारादिकं च सङ्गृह्यते। अत एवेयं सर्वाभिनयात्मिका सर्वव्यापारात्मिका च। तत्र विचित्रं नेपथ्यं वेणीसंहारे अश्वत्थाम्नः। उदयनचरिते किलिञ्जहस्तिप्रयोगः। मायाशिरोदर्शनं रामाभ्युदये। बलीमुखभयेन पात्रप्रवेशो रत्नावल्याम्। हर्षेण वामनचेट्याः प्रवेशः सत्यहरिश्चन्द्रे। वालिनेतृत्यागेन च सुग्रीवनेत्रन्तरग्रहणम्। परशुरामस्यौद्धत्यावस्थात्यागेन शान्तावस्थान्तरग्रहणम्। विचित्रभावं कार्यान्तरं कृत्याराचणे। तथाहि अङ्गदेनाभिद्रूयमाणाया मन्दोदर्या भयम्, अङ्गदस्योत्साहोऽस्यैव रावणदर्शनेन 'एतेनापि सुराजिता' इत्यादि वदतो हासः, 'यस्तावेन निगृह्य बालक इव प्रक्षिप्य कक्षान्तरे' इति च जल्पतो जुगुप्सा-हास-विस्मयाः, रावणस्य रति–क्रोधौ। नियुद्धादि तु रामायणीयेष्विन्द्रजिल्लक्ष्मणयोरिति ॥ १०८ ॥

अथ 'रस–भावाभिनयगाः' इत्यतो वृत्तिलक्षणात् प्रथमं रसानाचष्टे—

स्थायी भावः श्रितोत्कर्षो विभाव–व्यभिचारिभिः।
स्पष्टानुभावनिश्चेयः सुख–दुःखात्मको रसः ॥ १०९ ॥

प्रतिक्षणमुदय–व्ययधर्मकेषु बहुष्वपि व्यभिचारिष्वनुयायितयाऽवश्यं तिष्ठतीति स्थायी। यद्वा तद्भाव एव भावात्, अभावे वा भावाद् रत्यादिर्व्यभिचारिणं ग्लान्यादिकं प्रत्यवश्यं स्थायी। उपचयं प्राप्य रसरूपेण रत्यादिर्भवतीति भावः। विभावैर्ललनोद्यानादिभिरालम्बनोद्दीपनरूपैर्बाह्यैर्हेतुभिः

सत एवाविर्भावाद्, व्यभिचारिभिर्ग्लान्यादिभी रसिकमनः-शरीरवर्तिभिः परिपोषणाच्च श्रितोत्कर्षः। स्वीकृतसाक्षात्कारित्वानुभूयमानावस्थो यथासम्भवं सुख-दुःखस्वभावो रस्यते आस्वाद्यत इति रसः। तत्रेष्टविभावादिप्रथितस्वरूपसम्पत्तयः शृङ्गार-हास्य-वीराद्भुत-शान्ताः पञ्च सुखात्मानोऽपरे पुनरनिष्टविभावाद्युपनीतात्मानः करुण-रौद्र-बीभत्स-भयानकाश्चत्वारो दुःखात्मानः। यद् पुनः सर्वरसानां सुखात्मकत्वमुच्यते, तत् प्रतीतिबाधितम्। आस्तां नाम मुख्यविभावोपचितः काव्याभिनयोपनीतविभावोपचितोऽपि भयानको बीभत्सः करुणो रौद्रो वा रसास्वादवतामनाख्येयां कामपि क्लेशदशामुपनयति। अत एव भयानकादिभिरुद्विजते समाजः। न नाम सुखास्वादादुद्वेगो घटते। यत् पुनरेभिरपि चमत्कारो दृश्यते स रसास्वादविरामे सति यथावस्थितवस्तुप्रदर्शकेन कवि-नटशक्तिकौशलेन। विस्मयन्ते हि शिरश्छेदकारिणाऽपि प्रहारकुशलेन वैरिणा शौण्डीरमानिनः। अनेनैव च सर्वाङ्गाह्लादकेन कवि-नटशक्तिजन्मना चमत्कारेण विप्रलब्धाः परमानन्दरूपतां दुःखात्मकेष्वपि करुणादिषु सुमेधसः प्रतिजानते। एतदास्वादलौल्येन प्रेक्षका अपि एतेषु प्रवर्तन्ते। कवयस्तु सुख-दुःखात्मकसंसारानुरूप्येण रामादिचरितं निबध्नन्तः सुख-दुःखात्मकरसानुविद्धमेव ग्रथ्नन्ति। पानकमाधुर्यमिव च तीक्ष्णास्वादेन दुःखास्वादेन सुतरां सुखानि स्वदन्ते इति। अपि च सीताया हरणम्, द्रौपद्याः कचाम्बराकर्षणम्, हरिश्चन्द्रस्य चाण्डालदास्यम्, रोहिताश्वस्य मरणम्, लक्ष्मणस्य शक्तिभेदनम्, मालत्या व्यापादनारम्भणमित्याद्यभिनीयमानं पश्यतां सहृदयानां को नाम सुखास्वादः ?। तथाऽनुकार्यगताश्च करुणादयः परिदेवितानि(नु)कार्यत्वात् तावद् दुःखात्मका एव। यदि चानुकरणे सुखात्मानः स्युना(र्न) सम्यगनुकरणं स्याद्, विपरीतत्वेन भासनादिति। योऽपीष्टादिविनाशदुःखवतां करुणे वर्ण्यमानेऽभिनीयमाने वा सुखास्वादः सोऽपि परमार्थतो दुःखास्वाद एव। दुःखी हि दुःखितवार्तया सुखमभिमन्यते, प्रमोदवार्तया तु ताम्यतीति करुणादयो दुःखात्मान एवेति। विप्रलम्भशृङ्गारस्तु दाहादिकार्यत्वाद् दुःखरूपोऽपि सम्भोगसम्भावनागर्भत्वात् सुखात्मकः। रसश्च मुख्यलोकगतः प्रेक्षकगतः काव्यस्य श्रोतनुसन्धायकहृदयगतो वेति। 'स्पष्टा-' इति स्पष्टाः सम्यग् निर्णीताः। असन्दिग्धं हि लिङ्गं भवति। अनुभाव-

यन्ति परस्थानपि रसानवबोधयन्तीत्यनुभावाः स्तम्भ-स्वेदाश्रु-रोमाञ्च-भ्रूक्षेपादयस्तैर्यथासम्भवं सत्तया निश्चेयः। इह तावत् सर्वलोकसिद्धा परस्थस्य रसस्य प्रतिपत्तिः। सा च न प्रत्यक्षा चेतोधर्माणामतीन्द्रियत्वात्। तस्मात् परोक्षैव। परोक्षा च प्रतिपत्तिरविनाभूताद् वस्त्वन्तरात्। अत्र च रसे अन्यस्य वस्त्वन्तरस्यासम्भवात् कार्यमेवाविनाकृतं परगतविभावाद्यनुक्रियायां च परञ्जनार्थं प्रवृत्तस्य नटस्य रसाभावेऽपि स्तम्भ-स्वेदादयो भवन्तीति। नैषां रसानान्तरीयकत्वमाशङ्कनीयम्। तेषां परगतरसजनकत्वेनाकार्यत्वात्। नटगता हि स्तम्भादयः प्रेक्षकगतरसानां कारणम्, प्रेक्षकगतास्तु कार्याणि। परोक्षं चार्थं बुभुत्सुना परोक्षार्थनान्तरीयके लिङ्गस्वरूपे निपुणेन प्रतिपत्त्रा भाव्यम्। नटेऽपि च रसं गमयन्त्येव यदा रसकार्या भवन्ति, न च नटस्य रसो न भवतीत्येकान्तः। पण्यस्त्रियो हि धनलोभेन पररत्यर्थं रतादि विपञ्चयन्त्यः कदाचित् स्वयमपि परां रतिमनुभवन्ति। गायनाश्च परं रञ्जयन्तः कदाचित् स्वयमपि रज्यन्ते। एवं नटोऽपि रामादिगतं विप्रलम्भाद्यनुकुर्वाणः कदाचित् स्वयमपि तन्मयीभावमुपयात्येवेति। तद्गता अपि रोमाञ्चादयस्तत्र रसं गमयेयुरेव। अत एव 'स्पष्टानुभाव-' इत्युक्तम्। रोमाञ्चादयश्च ये स्त्री-पुंस-नट-काव्यस्थास्ते परेषां रसजनकत्वात् विभावमध्यवर्तिनः। प्रेक्षक-श्रोत्रनुसन्धात्रादिस्थितास्तु रसस्य कार्याणि सन्तो व्यवस्थापकाः। तत्र विभावाः परमार्थेन सन्तः प्रतिनियतविषयमेव स्थायिनं रसत्वमापादयन्ति। तत्र नियतविषयोल्लेखी रसास्वादप्रत्ययः। युवा हि रागवतीं युवतिमवलम्ब्य तद्विषयामेव रतिं शृङ्गारतयाऽऽस्वादयति। यत्र तु परानुरक्तां वनितामवलम्ब्य सामान्यविषया रतिरुपचयमुपैति, तत्र न नियतविषयः शृङ्गाररसास्वादः; विभावानां सामान्यविषये स्थाय्याविर्भावकत्वात्। बन्धुशोकार्तां च रुदतीं स्त्रियमवलोक्य सामान्यविषय एव करुणरसास्वादः। एवमन्येष्वपि रसेषु विशेष-सामान्यविषयत्वं द्रष्टव्यम्। ये पुनरपरमार्थसन्तोऽपि काव्याभिनयाभ्यां सन्त इवोपनीता विभावास्ते श्रोत्रनुसन्धातृ-प्रेक्षकाणां सामान्यविषयमेव स्थायिनं रसत्वमापादयन्ति। अत्र च विषयविभागानपेक्षी रसास्वादप्रत्ययः। न हि रामस्य सीतायां शृङ्गारेऽनुक्रियमाणे सामाजिकस्य सीताविषयः शृङ्गारः समुच्छलति, अपि तु सामान्यस्त्रीविषयः। नियतविषय-

स्मरणादिना स्थायिनः प्रतिनियतविषयतायां तु प्रतिनियतविषय एव रसास्वादः। तथा परमार्थसतामभिनयकाव्यार्पितानां च विभावानां बहुसाधारणत्वाद् य एकस्य रसास्वादः सोऽन्या[न्] प्रति क्षेपात्मैत्ययोगव्यवच्छेदेन न पुनरन्ययोगव्यवच्छेदेन। एवं च लोके काव्ये वा सर्वरसिकसाधारणो रसास्वादो न पुनः सर्वथाप्याधारानुल्लेखी। आधारोल्लेखनिरपेक्षायाश्चित्तवृत्तेः कस्याश्चिदनुपलक्षणात्। चित्तवृत्तिविशेषश्च रसः। अत्र च रत्यादेर्विभावैराविर्भूतस्य पोषकारिणो व्यभिचारिणो रसिकगता एव ग्राह्याः। यदा हि विभावैः स्त्र्यादिभिः काव्यनटगतैर्वाऽन्यस्य रत्यादयो रसोन्मुखत्वेनोन्मील्यन्ते, तदा यथायोगं व्यभिचारिणोऽपि तत्र प्रादुःषन्ति, नहि स्त्र्यादिचिन्तां शृङ्गारो धृतिं हास्यो विषादं करुणोऽमर्षं रौद्रो हर्षं वीरस्त्रासं भयानकः शङ्कां बीभत्सः औत्सुक्यमद्भुतो निर्वेदं शान्तः सहचारिणं विना प्रादुर्भवति। अन्यगतचेतसो विरक्तचेतसो वा वाक्यार्थावबोधे वनितादिदर्शनेऽपि वा चिन्ताद्यभावे रसाभावात्। सौक्ष्म्यादाशुभावाच्च क्वचिदनुपलक्षणेऽपि न दोषः। प्रादुर्भूताश्च व्यभिचारिणो रसोन्मुखं स्थायिनं पोषयन्तो रसत्वमापादयन्ति। अत एव रसत्वोन्मुखानां स्थायिनां व्यभिचारिणः सहचारिणो विभावास्तु प्राग्भाविनः। ये पुनः स्त्र्यादिगताः काव्याभिनयोपदर्शिताश्च व्यभिचारिणोऽनुभावा वा ते परस्मिन् रसोन्मुखत्वेन स्थायिनमुन्मीलयन्ति ते विभावा एव जनकत्वात्। व्यभिचार्यनुभावव्यपदेशः पुनरेतेषां स्त्र्याद्यपेक्षया वर्णनीयानुकार्यापेक्षया च। यदप्युच्यते 'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः' इति तत्राप्यनुभावा व्यभिचारिणश्च स्त्र्यादिवर्णनीयानुकार्यापेक्षयैव द्रष्टव्याः। तदेवं स्व–परयोः प्रत्यक्ष–परोक्षाभ्यां गमः सुख–दुःखात्मा लोकस्य नटस्य काव्यश्रोत्रनुसन्धात्रोः प्रेक्षकस्य च रसः। केवलं मुख्यस्त्री–पुंसयोः स्पष्टेनैव रूपेण रसो विभावानां परमार्थसत्त्वादत एव व्यभिचारिणोऽनुभावाश्च रसजन्याः तत्र स्पष्टरूपाः। अन्यत्र तु प्रेक्षकादौ श्यामलेनैव रूपेण विभावानामपरमार्थसतामेव काव्यादिना दर्शनात्। अत एव व्यभिचारिणोऽनुभावाश्च रसानुसारेणास्पष्टा एव। अत एव प्रेक्षकादिगतो रसो लोकोत्तर इत्युच्यते। काव्यस्य च रसाविर्भावकविभावप्रत्यायनाद् सरसत्वम्, न पुनः काव्यमेव रसः, काव्ये

वाऽधारे रसः। श्रितोत्कर्षो हि चेतोवृत्तिरूपः स्थायी भावो रसः। स चाचेतनस्य काव्यस्यात्माधेयो वा कथं स्यात्? । ततः काव्यार्थप्रतिपत्तेरनन्तरं प्रतिपत्तॄणां रसाविर्भावः। प्रतिपत्तारश्चात्मस्थं सुखमिव रसमास्वादयन्ति, न पुनर्बहिःस्थं रसं मोदकमिव प्रतियन्ति। अन्यो हि मोदकस्यास्वादोऽन्यश्च प्रत्ययो [रसस्य] नहि बहिःस्थितस्य रसस्य प्रत्ययमात्रेण रसास्वादश्चर्वणात्मकः सङ्गच्छते। भयानक-करुणविभावादि काव्यार्थात् प्रतिपत्तुश्चेतोधर्मतया स्थितौ भय-शोकौ भयानक-करुणतया परिणमतः। यदि च प्रतिपत्तुः स्थाय्येव न रसतया भवति तदा बहिःस्थस्य रसस्य प्रत्ययोऽपि न प्राप्नोति। काव्ये नटेऽन्यत्र वा रसस्यासत्त्वात्, असतश्चापि प्रत्ययेऽहृदयस्यापि प्रतीतिः स्यात्। ततो विभावप्रतिपादककाव्यप्रतिपत्तेरनन्तरं प्रतिपत्तुरेव स्थायी रसो भवति, तद्धेतुत्वाच्च काव्यं रसवदिति ॥ १०९ ॥

अथ रसभेदकथनावसरेऽपि प्रस्तावागतानामनुभावादिसंज्ञानां विषयं लक्षयति—

> कार्यहेतुः सहचारी स्थाय्यादेः काव्यवर्त्मनि ।
> अनुभावो विभावश्च व्यभिचारी च कीर्त्यते ॥ ११० ॥

स्थायिनामादिशब्दाद् रसभावानां च यथासम्भवं ये लोकसिद्धाः कार्यहेतुसहचारिणस्ते काव्यवर्त्मन्यभिनेयानभिनेयभेदभिन्ने यथासङ्ख्यमनुभाव-विभाव-व्यभिचारिसंज्ञाभिः कीर्त्यन्ते काव्यसंस्कारतिरस्कृतात्मभिः कदाचिल्लोकेऽप्येवं व्यवह्रियन्ते। तत्रानु लिङ्गनिश्चयात् पश्चा[द् भाव]यन्ति गमयन्ति लिङ्गिनं रसमित्यनुभावाः स्तम्भादयः। वासनात्मतया स्थितं स्थायिनं रसत्वेन भवन्तं विभावयन्त्याविर्भावनाविशेषेण प्रयोजयन्तीत्यालम्बनोद्दीपनरूपा ललनोद्यानादयो विभावाः। रसोन्मुखं स्थायिनं प्रति विशिष्टेनाभिमुख्येन चरन्ति वर्तन्त इति व्यभिचारिणः। आभिमुख्यं च पोषकत्वं यद्वा व्यभिचरन्ति स्थायिनि सत्यपि केऽपि कदापि न भवन्तीति व्यभिचारिणः स्वविभावव्यभिचारिणः भावे भावाद्, अभावेऽभावाच्च। रसायनमुपयुक्तवतो हि ग्लान्यालस्य-श्रमप्रभृतयो न भवन्त्येव। तत्र स्थायिनो रत्यादयः संविदात्मकत्वादजडा एव। धैर्यादीनां स्वेदा-

दीनां चानुभावानां वनितादीनां पर्वतादीनां च विभावानां निर्वेदादीनां व्याध्यादीनां च व्यभिचारिणां यथासङ्ख्यं संविन्मयत्व-शरीरधर्मत्वादिना जडाजडात्मकत्वम्। एते चानुभावादयः स्थायिनं प्रति कार्यकारणसहचारिरूपत्वादेवाप्रधानम्। स्थायी तु प्रकर्षप्राप्त्यैषां प्रच्छादकत्वात् प्रधानम्। तथा व्याघ्रादेर्विभावस्य क्रोध-भयाविर्भावकत्वाच्छ्रम-चिन्ताऽऽदेश्च व्यभिचारिणो भयोत्साहादिपोषकत्वात् स्तम्भ-वेपथु-स्वेदादेश्चानुभावस्य शृङ्गार-भयानकादिजत्वात् क्वचिदपि न पार्थक्ये नियमः। सामग्रीपतितस्य तु नियम इति सामग्र्यैवैषामाविर्भाविका पोषिका ज्ञापिका चेति ॥ ११० ॥

अथ प्रस्तुतानेव रसभेदानाह—

शृङ्गार-हास्य-करुणा रौद्र-वीर-भयानकाः।
बीभत्साद्भुत-शान्ताश्च रसाः सद्भिर्नव स्मृताः॥ १११ ॥

तत्र कामस्य सर्वजातिसुलभतयाऽत्यन्तपरिचिततया च सर्वान् प्रति हृद्यतेति पूर्वं शृङ्गारः। ततः शृङ्गारानुगामित्वाद् हास्यः। ततो हास्यविरोधित्वात् करुणः। कामस्य चार्थजत्वात् ततोऽर्थप्रधानो रौद्रः। कामार्थयोश्च धर्मजन्यत्वात् ततो धर्मप्रधानो वीरः। अस्य च भीताभयप्रदानसारत्वात् ततो भयानकः। भीतस्य च सात्त्विकैर्जुगुप्सनीयत्वात् ततो बीभत्सः। बीभत्सस्य च विस्मयेनापनीयमानत्वात् ततोऽद्भुतः। धर्मस्य च शममूलत्वादन्ते शम इति। एते शृङ्गारादयो नवैव रसा रञ्जनाविशेषेण पुरुषार्थोपयोगाधिक्येन च सद्भिः पूर्वाचार्यैरुपदिष्टाः। सम्भवन्ति त्वपरेऽपि यथा गर्द्धस्थायी लौल्यः, आर्द्रतास्थायी स्नेहः, आसक्तिस्थायि व्यसनमरतिस्थायि दुःखं, सन्तोषस्थायि सुखमित्यादि। केचिदेषां पूर्वेष्वेवान्तर्भावमाहुरिति ॥ १११ ॥

अथ सभेदं शृङ्गारं निरूपयति—

सम्भोग-विप्रलम्भात्मा शृङ्गारः प्रथमो वहुः।
मान-प्रवास-शापेच्छा-विरहैः पञ्चधाऽपरः॥ ११२ ॥

विलासिनोरन्योन्यानुकूलवर्तिनोः प्रेमपरयोर्यद् दर्शन-स्पर्शनादिः स सम्भोगः। परस्परानुरक्तयोरपि विलासिनोः पारतन्त्र्यादेरघटनं चिच-

विश्लेषे वा विप्रलम्भः । एतौ द्वावप्यवस्थाविशेषावात्मा स्वभावो यस्या-वस्थातुर्दशाद्वयानुयायिन आस्थाबन्धात्मकरतिप्रकर्षरूपस्य शृङ्गारस्य तेन शृङ्गारस्य नेमौ भेदौ गोत्वस्येव शाबलेय-बाहुलेयावपि तु सम्भोगेऽपि विप्रलम्भसम्भावनासद्भावाद् विप्रलम्भेऽपि मनसा सम्भोगानुवेधादुभय-संवलितस्वभावः शृङ्गारः। उत्कटत्वाच्चैकदेशेऽपि सम्भोगशृङ्गारो विप्रलम्भ-शृङ्गार इति चोपचारेणोच्यते । अवस्थाद्वयमीलननिबन्धने च सातिशयश्च-मत्कारः । यथा—

" एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यं हृदयस्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
दम्पत्योः शनकैरपाङ्गवलनामिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्याषृत्तकण्ठग्रहम् ॥ "

अत्रेर्ष्याविप्रलम्भसम्भोगयोर्विभावादिकृता सातिशया चमत्कृतिः । प्रथमः सम्भोगाख्यो बहुः परस्परावलोकन-चुम्बन-विचित्रवक्रोक्त्यादिभे-दतोऽनन्तप्रकारः । यथा—

" किमपि किमपि मन्दं मन्दमासत्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥ " इति ।

अपरो विप्रलम्भः । ईर्ष्या-प्रणयभङ्गाभ्यां वैमनस्यं मानः । यथा—

" याते द्वारवतीं तदा मधुरिपौ तद्दत्तझम्पानतां
कालिन्दीतटरूढवञ्जुललतामालिङ्ग्य सोत्कण्ठया ।
तद् गीतं गुरुबाष्पगद्गदगलत्तारस्वरं राधया
येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम् ॥ "

सन्निहितदेशस्यापि रूपान्तरापादनं शापः । यथा कादम्बर्यां महा-श्वेतया वैशम्पायनस्य शुकरूपापादनम् । मातापित्रादिपारतन्त्र्याद् भावि-नवसङ्गमयोः सङ्गमाभिलाष इच्छा । यथा—

" उद्धत्थो पियइ जलं जह जह विरलंगुली चिरं पहिओ।
पावालिया वि तह तह धारं तणुअं पि तणुएइ ॥ "

यथा वाऽस्माकं सुधाकलशे—

" रत्थाइ संचरंतं नियच्छिउं पाडिवेसियजुयाणं।
कम्मयरीकम्मं पि हु घणवइधूआ सयं कुणइ ॥ "

सम्भूतभोगयोर्माताद्यभावेऽपि कार्यान्तरव्यापृततयाऽननुसर्पणं विरहः। यथा—

" अन्यत्र व्रजतीति का खलु कथा नाप्यस्य तादृक् सुहृद्
यो मां नेच्छति नागतश्च सह हा! कोऽयं विधेः प्रक्रमः।
इत्यल्पेतरकल्पनाकवलितस्वान्ता निशान्तान्तरे
बाला वृत्तविवर्तनव्यतिकरा नाप्नोति निद्रां निशि ॥ "

इति ॥ ११२ ॥

अथोभयात्मनोऽपि शृङ्गारस्य विभावानुभावौ प्रतिपादयति—

स्त्री-पुंस-काव्य-गीतर्तु-माल्य-चेष्टेष्ट-केलिभिः।
अभिनेयः स चोत्साह-चाटु-तापाश्रु-मन्युभिः ॥ ११३ ॥

इह शृङ्गारे स्त्री-पुंसौ परस्परं मुख्यविभावौ। तयोश्चोचमप्रकृतिकयोरुपयोगी काव्यादिः। काव्यं च सरसमभिनेयानभिनेयभेदभिन्नम्। गीतेन वाद्य-नृत्याद्यपि गृह्यते। ऋतवो वसन्ताद्याः। माल्येन विलेपन-ताम्बूल-विशिष्टभवनादि लक्ष्यते। चेष्टा विशिष्टवस्त्राभरणादि नेपथ्यम्। इष्टो विदूषक-चन्द्रोदय-चक्रवाक-हंसालेख्यादिः। यद्वा नयन-वदनप्रसाद-स्मित-मनोज्ञाङ्गविकार-वक्रोक्त्यादयो ग्लान्यालस्य-श्रमादयश्चेष्टाः। एवंविधा हि विकाराः परस्परं स्त्री-पुंसयोरिष्टा भवन्ति। केलयः पुष्पावचयोपवनगमन-

१ ऊर्ध्वस्थः पिबति जलं यथा यथा विरलाङ्गुलिश्चिरं पथिकः।
प्रपापालिकाऽपि तथा तथा धारां तनुकामपि तनयति ॥

२ रथ्यायां संचरन्तं दृष्ट्वा प्रातिवेश्मिकयुवानम्।
कर्मकरीकर्मापि खलु धनपतिदुहिता स्वयं कुरुते ॥

जलक्रीडाऽऽद्यश्चेटाविशेषाः । एवमन्येऽप्युपलक्षणादेवंविधा विभावा द्रष्टव्याः । एभ्यो यथायोगमुभयात्मापि जायते । रतिस्थायी शृङ्गारः । स च शृङ्गारो लब्धसत्ताकः सन्नभिनेयो वाचिक-सात्त्विकाङ्गिकाहार्याभिनयैर्नटेन सामाजिकानां साक्षाच्चर्वणागोचरं उत्साहादिभिः कर्तव्यः । उत्साहो नयन-वदनप्रसादकारी चित्तोल्लासः । अयं च रत्याद्यपि वीरस्यात्रागन्तुकत्वादनुभावः । एवं रसान्तरं प्रति व्यभिचारित्वमपि स्थायिनां सहचारितया भवत्येव । अस्य च स्था[य्य]नुभावाभिनयद्वारेणात्राभिनयहेतुत्वम् । एवं रत्यादावपि वाच्यम् । तापोऽभिमताप्राप्तेः काय-मनःपीडा । मन्युरीर्ष्या-प्रणयभङ्गाभ्यां चित्तोद्वेगः । उत्साह-चाटुभ्यां नयनचातुर्य-भ्रूक्षेप[प्र]रस्याङ्गविकारादिः सम्भोगशृङ्गारस्यानुभावः सूचितः । तापाश्रु-मन्युभिः पुनः परिदेवनादिर्विप्रलम्भशृङ्गारस्यानुभावो लक्षितः । तत्र सम्भोगे सुखमया धृत्यादयो व्यभिचारिणः, विप्रलम्भे त्वालस्यौग्र(ग्र्य)-जुगुप्सावर्जा निर्वेदादयो दुःखप्राया इति ॥ ११३ ॥

अथ हास्यः—

विकृताचार-नल्पाङ्गाकल्प(ल्प)-विस्मापनोद्भवः ।
हास्योऽस्याभिनयो नासास्पन्दाश्रु-जठरग्रहैः ॥ ११४ ॥

विकृतः प्रकृति-देश-काल-वयोऽवस्थादिविपरीतः । अङ्गस्य च विकृतत्वं विरूपो व्यापारः, खञ्ज-कुण्टत्वादि वा । उपलक्षणाच्च धार्ष्ट्य-लौल्यादीनामनुचितानां मर्मोद्घटनान्यहसनायलोकनादेश्च ग्रहः । विस्मापनं कक्षा-नासावादन-ग्रीवा-कर्ण-चूडा-भ्रूनर्तन-परभाषाद्यनुकरणादिकं विटचेष्टितम् । एभ्यः स्वपरस्थेभ्यो हासस्थायी हास्यरसः प्रादुरस्ति । नासया गण्डौष्ठादयो ऽश्रुणा चाकुञ्चनप्रसारणादयो नेत्रविकारा जठरग्रहेण पार्श्वग्रह-करताडन-मुखरागादयः सङ्गृह्यन्ते । व्यभिचारिणश्चास्यावहित्थ-हर्षोत्साह-विस्मयादय इति ॥ ११४ ॥

अथास्य भेदानुपदिशति—

विहासश्चोपहासश्च मध्ये ज्येष्ठे स्मितं हसः ।
अपहासोऽतिहासश्च नीचे मायोऽधमे रसः ॥ ११५ ॥

तत्र हसनं मधुरस्वरं सास्यराग-समयप्राप्तं च विहसितम् । सांसशिरः-कम्पमुपहसितम् । एतौ भेदौ मध्यमप्रकृतौ । अलक्षितद्विजं स्मितम् । किञ्चिल्लक्ष्यदन्तं हसितम् । इमौ भेदावुत्तमप्रकृतौ । अनवसरप्राप्तं साश्रुनेत्रमुत्कम्पितांस-शिरश्चापहसितम् । करोपगूढपार्श्वं विक्रुष्टस्वरमुद्धतं चातिहसितम् । अमू भेदावधमप्रकृतौ । एवं षडेते हास्यभेदाः । अयं च हास्यो रसः प्रायो बाहुल्येनाधमप्रकृतौ पामरप्राये भवति । स्ववर्गापेक्षया च स्त्रिया· प्राधान्येऽपि पुरुषापेक्षयाऽधमत्वेवेति तस्यामपि । एवं करुण-भयानक-बीभत्साद्भुता अप्यधमप्रकृतौ भूयस्त्वमनुभवन्ति । पामरप्रायः सर्वः प्रकर्षेण हसति शोचति बिभेति परनिन्दामाद्रियते, स्वल्पेनापि सुभाषितेन सर्वत्र विस्मयते इति ॥ ११५ ॥

अथ करुणः—

मृत्यु-बन्ध-धनभ्रंश-शाप-व्यसनसम्भव ।
करुणोऽभिनयस्तस्य बाष्प-वैवर्ण्य-निन्दनैः ॥ ११६ ॥

शापोऽभिमतवियोगहेतुर्दिव्यप्रभावचतः आक्रोशः । व्यसनमनर्थः । अनेन देशोच्चाटनादेर्जातं विप्लवजातं सङ्गृह्यते । एभ्यो विभावेभ्यः शोकस्थायी करुणो रसः सम्भवति । बाष्प-वैवर्ण्याभ्यां निःश्वास-मुखशोष-स्मृतिलोप-स्रस्तगात्रताऽऽदयोऽनुभावाः सूचिताः । निन्दनमात्मनो दैवस्यान्यस्य चोपालम्भः । अनेन रुदित-प्रलपितोरस्ताडनादि गृह्यते । व्यभिचारिणस्तस्य निर्वेद-ग्लानि-चिन्तौत्सुक्य-मोह-श्रम-भय-विषाद-दैन्य-बा-(व्या)धि-जडतोन्मादापस्मारालस्य-मरण-स्तम्भ-वेपथु-वैवर्ण्याश्रु-स्वरभेदादय इति ॥ ११६ ॥

अथ रौद्रः—

प्रहारासत्य-मात्सर्य-द्रोहाधर्षापनीतिज ।
रौद्रः स चाभिनेतव्यो घात-दन्तौष्ठपीडनै ॥ ११७ ॥

परमविदारयतो विदारयतश्च शस्त्रादिव्यापारणं प्रहारः । अनेन गृहभृत्याद्युपमर्दनस्य ग्रहः । असत्येन वध-बन्धाद्यभिधाय[क]वाक्पारुष्यस्य [ग्रहः] । गुणेष्वसूया मात्सर्यम् । द्रोहो जिघांसा । दारादिव्यलीकार-विद्याकर्मदेशजात्यादिनिन्दा राज्यसर्वस्वहरणादिराधर्षः । अन्या-

योऽपनीतिः । अनेनौद्धत्यं सूचितम् । एतेभ्यो विभावेभ्यः क्रोधस्थायी रौद्रो रसो जायते । घातेन छेदन–भेदन–रुधिराकर्षणादिरनुभावो गृह्यते । दन्तौष्ठपीडनेन गण्डौष्ठस्फुरण–हस्ताग्रनिष्पेषाद्यनुभाववृन्दं सूच्यते । व्यभिचारिणश्चास्य मोहोत्साहावेगामर्ष–चापलौग्र्य–स्वेद–वेपथु–रोमाञ्चादय इति । स्थायिनोऽपि चोत्साहादयो रसान्तरं प्रति व्यभिचारितां स्वीकुर्वन्ति । स्तम्भ–स्वेदादयश्च न रसकार्या व्यभिचारितः(णः), किन्तु स्थायिकार्या इति ॥ ११७ ॥

अथ वीरः—

पराक्रम–बल–न्याय–यशस्तत्त्वविनिश्चयैः ।
वीरोऽभिनयनं तस्य धैर्य–रोमाञ्च–दानतः ॥ ११८ ॥

प[राक्रमः प]रकीयमण्डलाद्याक्रमणसामर्थ्यम् । बलं हस्त्यश्व–रथ–पदाति–धन–धान्य–मन्त्र्यादिसम्पत्, शारीरिकी शक्तिर्वा । न्यायः सामादीनां सम्यक्प्रयोगः । अनेनेन्द्रियजयो गृह्यते । यशः सार्वत्रिकी शौर्यादिगुणख्यातिः । अनेन शत्रुविषये सन्तापकर्तृत्वप्रसिद्धिरूपः प्रतापो गृह्यते । तत्त्वं याथात्म्यं तस्य विनिश्चयः । एवमादिभिर्विभावैरुत्साहस्थायी वीररसः सम्भवति । स चानेकधा युद्ध–धर्म–दान–गुण–प्रतापावर्जनाद्युपाधिभेदात् । धैर्यं महत्यपि परसैन्ये विपदि वाऽकातर्यम् । अनेन सैन्योत्तेजन–पराक्षेपादेरनुभावस्य ग्रहः । दानेन प्रमोद–माध्यस्थ्य–शान्तचेष्टादेः । व्यभिचारिणश्चास्य धृति–मति–गर्वावेगौग्र्यामर्ष–स्मृति–रोमाञ्चादयः । वीररसे च युद्धादिभावेऽपि न रौद्रत्वम्, उत्साह–न्यायप्रधानात् । रौद्रे तु मोहाहङ्कारापन्यायप्राधान्यमित्यनयोर्न साङ्कर्यमिति ॥ ११८ ॥

अथ भयानकः—

पताका–कीर्ति–रौद्राग्नि–शून्य–तस्करदोषजः ।
भयानकोऽभिनेतव्यः स्तम्भ–रोमाञ्च–कम्पनैः ॥ ११९ ॥

रौद्राः स्वराकारवक्रत्वेन भीषणाः पिशाचोलूकादयः । आजिः शस्त्राघातः, अयं चोपलक्षणं वध–बन्धयोः । शून्यं निर्जनं गेहारण्यादि । दोषो

गुरुनृपादेरपराधः । एभ्यो दृष्ट-श्रुतेभ्यश्चिन्त्यमानेभ्यो वा विभावेभ्यो भयस्थायी भयानको रसो जायते । गात्रस्याचलनं स्तम्भः । कम्पनं कर-चरणादीनां प्रवेपनम् । एभिर्गात्र-मुख-दृष्टिविकार-गलशोष-वैवर्ण्य-मूर्छाऽऽद्योऽनुभावाः सङ्गृह्यन्ते । व्यभिचारिणश्चास्य शङ्का-मोह-दैन्यावेग-चपलता-त्रासापस्मार-मरण-स्तम्भ-स्वेद-रोमाञ्च-वेपथु-स्वरभेद-वैवर्ण्यादय इति ॥ ११९ ॥

अथ बीभत्सः—

जुगुप्सनीयरूपादि-परश्लाघासमुद्भवः ।
बीभत्सोऽभिनयश्चास्य निष्ठेवोद्वेग-निन्दनैः ॥ १२० ॥

जुगुप्सनीया मालिन्य-क्वथितत्व-दुर्गन्धित्व-कर्कशत्वादिभिरमनोज्ञा रूपादयो रूप-रस-गन्ध-स्पर्श-शब्दलक्षणा विषयाः । परस्य विपक्षस्य श्लाघा स्तुतिः । एभ्यो दृष्ट-श्रुतेभ्यो विभावेभ्यो जुगुप्सास्थायी बीभत्सो रसः समुद्भवति । परश्लाघायां हि विशेषतो दोषदर्शनेन जुगुप्सते । निष्ठेवः कफनिरसनम् । उद्वेगो गात्रधूननम् । निन्दनं दोषोद्घट्टनम् । एभिर्गात्र-सङ्कोचन-मुखविकूणन-नासा-कर्णप्रच्छादन-हृल्लेखादिरनुभावः सूच्यते । व्यभिचारिणश्चास्य व्याधि-मोहावेगापस्मार-मरणादय इति ॥ १२० ॥

अथाद्भुतः—

दिव्येन्द्रजाल-रम्यार्थ-दर्शनाभीष्टसिद्धितः ।
अद्भुतः सोऽभिनेतव्यः श्लाघा-रोमाञ्च-हर्षतः ॥ १२१ ॥

दिव्याः शक्रादयः । इन्द्रजालं मन्त्र-द्रव्य-हस्तयुक्त्यादिनाऽसम्भवद्वस्तुप्रदर्शनम् । रम्यः सातिशयत्वेन हृद्योऽर्थः शिल्पकर्म-रूप-वाक्य-गन्ध-रस-स्पर्श-नृत्त-गीतादिकस्तस्य दर्शनं साक्षात्कारः । अनेन स्वयं कीर्तनं श्रवणं च गृह्यते । अभीष्टमत्यन्तमीप्सितम् । तस्य सिद्धिः प्राप्तिर्निष्पत्तिर्वा । एवमादिभ्यो विभावेभ्यो विस्मयस्थाय्यद्भुतो रसो भवति । हर्षेण स्वानुभावाः सूच्यन्ते । एभिर्नयनविस्तार-गात्रोत्फुल्लकसनानिमिषप्रेक्षण-चेलाङ्गुलिभ्रमण-गद्गदवचन-वेपथु-स्वेदादेरनुभावस्य ग्रहः । व्यभिचारिणश्चास्यावेग-जडता-सम्भ्रम-स्तम्भाश्रु-गद्गद-रोमाञ्चादय इति ॥ १२१ ॥

अथ शान्तः—

संसारभय–वैराग्य–तत्त्व–शास्त्रविमर्शनैः ।
शान्तोऽभिनयनं तस्य क्षमा–ध्यानोपकारतः ॥ १२२ ॥

देव–मनुष्य–नारक–तिर्यग्रूपेण बहुधा परिभ्रमणं संसारः तस्माद् भयम् । वैराग्यं विषयवैमुख्यम् । तत्त्वस्य जीवाजीव–पुण्य–पापादिरूपस्य, शास्त्रस्य मोक्षहेतुप्रतिपादकस्य विमर्शनं पुनः पुनश्चेतसि न्यसनम् । एवमादिभिर्विभावैः काम–क्रोध–लोभ–मान–मायाऽद्यनुपरक्तपरोन्मुखतावियर्जिताक्लिष्टचेतोरूपशमस्थायी शान्तो रसो भवति । तर्जन–वध–बन्धादिसहनं क्षमा । ध्यानं जीवाजीवादितत्त्वभावनम् । अनेन स्वानुभावा निश्चलदृष्टितादयः सूचिताः । उपकारेण मैत्री–प्रमोद–कारुण्य–माध्यस्थ्यादयोऽनुभावा गृह्यन्ते । व्यभिचारिणश्चास्य निर्वेद–मति–स्मृति–धृत्यादयः । अयं च कैश्चिन्नोक्तः, तेषां सकलक्लेशविमोक्षलक्षणमोक्षपुरुषार्थपराङ्मुखत्वमेव दूषणमिति ॥१२२॥

अथ काव्येषु रसनिबन्धेऽवहितैर्भाव्यमित्युपदिशति—

अर्थशब्दवपुः काव्यं रसैः प्राणैर्विसर्पति ।
अञ्जसा तेन सौहार्दं रसेषु कविमानिनाम् ॥ १२३ ॥

*शब्दार्थावभिनेयानभिनेयभेदस्य काव्यस्य वपुः शरीरम् । रसाः पुनः* प्राणाः तैर्विभावो निबन्धन[का]रणोपनीतैः सहृदयहृदयेषु काव्यं विसर्पति । तेन हेतुना कविम्मन्यानामञ्जसा मुख्यतो रसेषु सौहार्दं प्रीतिः । रसाविर्भाविना प्रयत्नेनैवोपनीतस्यालङ्कारस्यापि निबन्धः स चेतश्चमत्करोत्येवेत्यञ्जसेत्युक्तम् । यथा—

" कपोले पत्राली करतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः ।
मुहुः कण्ठे लग्नस्तरलयति बाष्पः स्तनतटं
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम् । "

यथा राघवाभ्युदये—

" तल्लावण्यमनन्यवृत्तिवचसां तत् कौशलं पेशलं
तत् सौभाग्यमभाग्यमर्त्यविमुखं तद् यौवनं पावनम् ।

एकेन प्रियसङ्गमेन मनसो विश्रामधाम्ना विना
व्यर्थं सा हृदि सर्वमेव मनुते व्यालोलनेत्रोत्पला ॥"

यथा वाऽस्मदुपज्ञे मल्लिकामकरन्दे प्रकरणे मकरन्दः—

"आस्यं हास्यकरं शशाङ्कयशसां बिम्बाधरः सोदरः
पीयूषस्य वचांसि मन्मथमहाराजस्य तेजांसि च।
दृष्टिर्विष्टपचन्द्रिका स्तनतटी लक्ष्मीनटीनाट्यभू-
रौचित्याचरणं विलासकरणं तस्याः प्रशस्यावधेः ॥"

यथा वाऽस्मदुपज्ञायां वनमालायां नाटिकायाम्—

"राजा—(दमयन्तीं प्रति)

"दृष्टिः कथं जरठपाटलपाटलेयं
कम्पः किमेष पदमोष्ठदले बबन्ध ?।
नारङ्गरङ्गहरणप्रवणः प्रियेऽस्य
वक्त्रस्य कुङ्कुमभृतेऽरुणिमा कुतोऽयम् ? ॥"

एषु रसप्रयत्नेनैव शब्दार्थालङ्कारलाभ इति ॥ १२३ ॥

अमुमेवार्थं द्रढयति—

न तथाऽर्थशब्दोत्प्रेक्षा श्लाघ्या काव्ये यथा रसः।
विपाकक्रममप्याम्रमुद्वेनयति नीरसम् ॥ १२४ ॥

न हि नवनवार्थव्युत्पन्नशब्दग्रथनमेव काव्यम्, तर्क-व्याकरणयोरपि तथाभावप्रसङ्गात्; किन्तु विचित्ररसपवित्रशब्दार्थनिवेशः। विपाककमनीयमपि सहकारफलं विरसमुद्वेगमावहति। अतः शब्दार्थमात्रशरणाः शुष्ककवयो यमक-श्लेषादीनामेव निबन्धमर्हन्ति, न तु रसैकशरणस्य नाट्यस्येति ॥ १२४ ॥

अथ विरुद्धरसानां विरोधे व्यवस्थामाह—

एकत्र स्वैरिणोस्तुल्यशक्त्योर्योगे विरुद्धता।

एकस्मिन्नाश्रये नायकादौ तस्मिन्नेव प्रक्रमे परस्परविरुद्धयो रसयो-र्विरुद्धता, न तु भिन्ने। यथाऽर्जुनचरिते—

"समुत्थिते धनुर्ध्वनौ भयावहे किरीटिनः।
महानुपप्लवोऽभवत् पुरे पुरन्दरद्विषाम्॥"

अत्र नायकस्य वीरः, प्रतिपक्षाणां तु भयानकः।

यथा वा—

"दन्तक्षतानि करजैश्च विपाटितानि
प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे।
दत्तानि रक्तमनसा मृगराजवध्वा
जातस्पृहैर्मुनिभिरप्यवलोकितानि॥"

अत्र तस्मिन्नेव प्रक्रमे मुनि-कामुकयोर्भिन्नयोर्न शृङ्गार-शान्तौ विरुद्धाविति।

तथा स्वैरिणोः स्वतन्त्रयोः सतोर्विरुद्धयो रसयोर्विरुद्धता, न तु पर-तन्त्र-स्वतन्त्रयोर्मुख्यस्यायत्तयोर्वा। यथा—

"कुरवक! कुचाघातक्रीडा-सुखेन वियुज्यसे
बकुलविटपिन्! स्मर्तव्यं ते मुखासव-सेचनम्।
चरणघटनाशून्यो यास्यस्यशोक! सशोकता-
मिति निजपुरत्यागे यस्य द्विषां जगदुः स्त्रियः॥"

अत्रोद्दीपनविभावैः कुरवकादिभिरुद्दीप्यमानः शृङ्गारो विशेषतः करुणं स्वतन्त्रमङ्गिनं द्विषत्स्त्रीणां पोषयति।

यथा वा—

"अयं स रसनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरु-जघनस्पर्शी नीवीविर्श्र(स्रं)सनः करः॥"

अत्र भूरिश्रवसः समरभुवि पतितबाहुदर्शनेन तत्प्रियाणां शृङ्गारः स्मर्यमाणः करुणं पोषयति।

मुख्यस्यायत्तौ यथा—

"क्षिप्तो हस्तावलग्नः प्रसभमभिहतो व्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण।

आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साम्रनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥"

अत्र त्रिपुररिपुप्रभावातिशयस्य करुण–शृङ्गारावङ्गभूतौ । परस्परविरोधेऽपि चान्यमुखप्रेक्षितपारतन्त्र्यदुःखाभिघातेन स्वात्मपुष्टिमलभमानयोर्नृपसमीपस्थिततातताथिद्वयवत् कुतः करुण–शृङ्गारयोर्घात्य–घातकभाव इति।

तथैकाश्रयोरपि तुल्यबलयोर्विरोधो न तु हीनाधिकबलयोः । यथा पुरूरवाः प्राह—

" क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा !
दोषाणां प्रशमाय मे श्रुतमहो ! कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः ! स्वास्थ्यमुपैहि कः खलु युवा धन्योऽव(ध)रं धास्यति ? ॥"

अत्र शृङ्गार–शान्तयोर्न परस्परमङ्गानि(ङ्गि)भावोऽपोष्य–पोषकत्वात् । तृतीयस्याभावादङ्गभावोऽपि नास्ति, किन्तु स्वतन्त्रौ, तथापि न विरोधः शान्तस्यागन्तुकत्वेनाल्पबलत्वात् । अत एवात्र पर्यन्ते शृङ्गारे विश्रान्तिः । एवमन्यत्राप्युदाहार्यम् ।

तथैकाश्रययोः स्वैरिणोस्तुल्यशक्त्योर्विरुद्धयोर्योगे नैरन्तर्ये विरोधो न त्वविरुद्धेन रसान्तरेण व्यवधाने । यथा नागानन्दे—

" रागस्यास्पदमित्यवैमि न हि मे ध्वंसीति न प्रत्ययः । "

इत्यादिनोपक्षेपात् प्रभृति शान्तो रसस्तस्य विरुद्धो मलयवतीविषयः शृङ्गारः । 'अहो ! गीतमहो ! वादित्रम्' इत्यादिनाऽद्भुतमन्तरे कृत्वा निबन्धः। एवमन्येष्वप्युदाहार्यमिति । विभावव्यभिचारिणां तु रसानुरोधेन विरोधः परिहारश्च द्रष्टव्यः ।

अथ रसदोषानाह—

दोषोऽनौचित्यमङ्गीप्यमपोषोऽत्युक्तिरङ्गिमित् ॥ १२९ ॥

सहृदयानां विचिकित्साहेतु कर्मानौचित्यं तचानेकधा । तत्र क्वचित् प्रतिकूलविभावनिबन्धो यथा—

" त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः ।
परभृताभिरितीव निवेदिते स्मरमते रमते स्म वधूजनः ॥"

अत्र शृङ्गारप्रतिकूलस्य शान्तस्यानित्यताप्रकाशरूपो विभावो निबद्धः।

क्वचिदकाण्डे प्रथनम्। यथा वेणीसंहारे धीरोद्धतप्रकृतेरपि दुर्योधनस्य भीष्मप्रमुखमहावीरलक्षक्षयकारिणि प्रवृत्ते समरसंरम्भे भानुमतीं प्रति शृङ्गारवर्णनम्।

क्वचिदकाण्डे विच्छेदो यथा वीरचरिते राघव-भार्गवयोर्धाराधिरूढे वीररसे 'कङ्कणमोचनाय गच्छामि'इति राघवस्योक्तिः।

क्वचिदुत्तमाधम-मध्यमानां प्रकृतीनामन्यथा वर्णनम्। यथोत्तमानां हास्य-बीभत्स-करुण-भयानकाद्भुतप्रकर्षः, मध्यमाधमानां त्वग्राम्यः शृङ्गारः, वीर-रौद्र-शान्तप्रकर्षश्च। उत्तमेष्वपि दिव्येषु सम्भोगशृङ्गारवर्णनं पित्रोः सम्भोगवर्णनसमं यथा कुमारसम्भवे उमा-महेश्वरयोः। अदिव्येषूत्तमेष्वपि सद्यःफलदक्रोध-स्वः-पातालगमन-समुद्रलङ्घनाद्युत्साहवर्णनम्। धीरोदात्त-धीरोद्धत-धीरललित-धीरशान्तेषूत्तमेषु वीर-रौद्र-शृङ्गार-शान्तानामवर्णनं विपरीतरसवर्णनं वा। मध्यमाधमेषु त्वेषु वीरादिरसप्रकर्षवर्णनम्।

क्वचिद् वर्ण-समासान्यथाप्रथनम्। तत्र दीप्तेषु रसेषु संयुक्तैर्मूर्द्धन्यैश्च वर्णैः समासदैर्घ्येण च प्रायः प्रसन्नो मसृणश्च बन्धः। अदीप्तेषु तु शृङ्गार-हास्य-करुण-शान्तेषु मूर्द्धस्थवर्गपञ्चमैर्ह्रस्वैश्च वर्णैरसमासेन मध्यसमासेन च प्रायः प्रसन्नो बन्धः। सर्वेषु च प्रसिद्धैरक्लिष्टैरग्राम्यैः पुष्टार्थैः पदैर्न्यासः।

क्वचिदुत्तमस्योत्तमनायिकायां व्यलीकसम्भावना। क्वचिन्नायिकापादप्रहारादिना नायकस्य कोपः। क्वचिद् वयो-वेष-देश-कालावस्था-व्यवहारादीनामन्यथा वर्णनम्। एवमन्यदपि यमक-श्लेष-चित्रादिकमृतु-समुद्रादि-चन्द्रार्कोदयास्तादिप्रकर्षवर्णनं च रसानङ्गमनौचित्यं द्रष्टव्यमिति।

अथाङ्गौग्र्यम्। अङ्गस्य मुख्यरसपोषकतया अवयवभूतस्यौग्र्यं विस्तरेणोत्कटत्वं दोषः। यथा कृत्यारावणे जटायुर्वध-लक्ष्मणशक्तिभेद-सीताविपत्तिश्रवणेषु रामस्य मुहुर्मुहुः करुणाधिक्यम्। अङ्गभूतो हि रसो न धाराधिरोहमर्हति, अन्यथाऽङ्गिन वीररस तिरोदधीत। केचिदत्र हयग्रीववधे हयग्रीववर्णनमुदाहरन्ति। स पुनर्वृत्तदोषः वृत्तनायकस्याल्पवर्णनात्।

तत्र हि वीरो रसः स विशेषतो वध्यस्य शौर्य-विभूत्यतिशयवर्णनेन भूष्यत इति ।

' अपोषः ' इति धाराऽनधिरोहणमपोषो दोषः । यथा—

" बीभत्सा विषया जुगुप्सिततमः कायो वयो गत्वरं
प्रायो बन्धुभिरध्वनीव पथिकैर्योगो वियोगावहः ।
हातव्योऽयमसम्भवाय विरसः संसार इत्यादिकं
सर्वस्यापि हि वाचि [ चे ]तसि पुनः कस्यापि पुण्यात्मनः ॥ "

अत्र कविना वाचीत्युपनिबध्नता विषयबीभत्सत्वादीनां शान्तजननं प्रति मन्दत्वमुक्तम् । अन्यथा सर्वस्य चेतस्यपि स्यात् । अपोषश्चाङ्गिनोऽङ्गानि-(ङ्गि)भावर्वाजतस्य वा मुक्तकोपात्तस्य अङ्गभूतस्यापोषः पुनरदोष एवेति ।

' प्र(अ)त्युक्तिरिति ' धाराधिरूढस्यापि रसस्य नैरन्तर्येण पुनः पुनरुद्दीप्तिर्दोषो यथा कुमारसम्भवे रतिप्रलापेषु । लब्धपरिपोषो हि रसः पुनः पुनः परामृश्यमानो मालतीमाल्यमिव म्लायति । अत एव प्रकर्षप्राप्तरसविशिष्टानां कवीनामल्पीयानेव वाग्विलास इति ।

' अङ्गिभिदिति ' बहुरसे प्रबन्धे अवयवभूतरसापेक्षयाऽङ्गिनोऽवयविभूतस्य रसस्य भिदननुसन्धानं दोषः । अनुसन्धिर्हि सर्वस्वं रसपोषस्य, स्मृत्यभावे पुनरपोष एव । यथा रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमनात् सागरिकाविस्मृतिरिति ।

अङ्गोम्यादयश्च दोषाः परमार्थतोऽनौचित्यान्तःपातिनोऽपि सहृदयानामनौचित्यव्युत्पादनार्थमुदाहरणत्वेनोपात्ताः । केचित् तु व्यभिचारिरसस्थायिनां स्वशब्दवाच्यत्व रसदोषमाहुस्तदयुक्तम् , व्यभिचार्यादीनां स्ववाचकपदप्रयोगेऽपि विभावपुष्टौ ।

" दूरादुत्सुकमागते विव(च)लितं सम्भाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किं चाऽञ्चितभ्रूलतम् ।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षण
चक्षुर्जातमहो ! प्रपञ्चचतुरं जातागसि प्रेयसि ॥ "

इत्यादौ रसोत्पत्तेरदोष एवायं तस्मादव्युत्पन्नोक्तित्वादवक्रोक्तिरेवेयम्।

एवमुभयरससाधारणविभावपदानां कष्टेन नियतविभावाभिधायित्वाधिगमोऽपि सन्दिग्धत्वलक्षणो वाक्यदोष एव। यथा—

" परिहरति रतिं मतिं लुनीते स्खलतितरां परिवर्तते च भूयः।
इति बत विषमा दशा स्वदेहं परिभवति प्रसभं किमत्र कुर्मः ? ॥ "

अत्र मतिपरिहारादीनां विभावानां करुणादावपि सम्भवात् शृङ्गारं प्रति भावत्वसन्देह इति ॥ १२५ ॥

अथ वृत्तिलक्षणे रसानन्तरमुद्दिष्टानां भावानामवसरस्तत्रापि रसानुरोधेन प्रथमं स्थायिन उच्यन्ते—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा-विस्मय-शमा रसानां स्थायिनः क्रमात् ॥ १२६ ॥

स्त्री-पुंसयोरास्थाबन्धापरपर्यायोऽन्योन्यमभिष्वङ्गो रतिः। एषा च कामावस्थानुवर्तिन्या अभिलाषमात्रसाराया व्यभिचारिण्या देवतादिषु बन्धुषु मनोहरवस्तुषु च प्रीतिरूपायाश्च रतेर्विलक्षणैव। रञ्जनोन्मादानुविद्धश्चित्तस्य विकासो हासः। निर्वेदानुविद्धं दुःखं शोकः। अपचिकीर्षा-जुगुप्साहेतुः परितापावेशः क्रोधः। धर्म-दान-युद्धादिकर्मण्यनालस्यमुत्साहः। वैक्लव्यं भयम्। कुत्सितत्वाध्यवसायो जुगुप्सा। उत्कृष्टत्वावसायो विस्मयः। निःस्पृहत्वं शमः। रसानां शृङ्गारादीनां 'स्थायिनः परिणामिकारणानि 'क्रमादिति' रसोद्देशक्रमेण, तेनामी रसान्तराणां व्यभिचारिणोऽनुभावाश्च भवन्ति, तत्रैषामागन्तुकत्वेन स्थायित्वाभावात्। सहभावित्वेन पोषकत्वे व्यभिचारिता। कार्यत्वे त्वनुभावता। तथैषां विभावा अनुभावाश्च ये शृङ्गारादिषु रसेषूक्तास्त एवेति न पृथगुच्यन्ते ॥ १२६ ॥

[1]निर्वेद-[2]ग्ला[3]न्यपस्मार-[4]शङ्का-[5]ऽसूया-[6]मद-[7]श्रमाः।
[8]चिन्ता-[9]चापल[10]मावेगो [11]मति[12]र्व्याधिः [13]स्मृति[14]र्धृतिः ॥ १२७ ॥
[15]अमर्षो [16]मरणं [17]मोहो [18]निद्रा-[19]सुप्त्यौ[20]ग्र्य-[21]हृष्टयः।
[22]विषादो[23]न्माद-[24]दैन्यानि [25]व्रीडा [26]त्रासो [27]वितर्कणम् ॥ १२८ ॥

गर्वौत्सुक्यावहित्थानि जाड्यालस्य-विबोधनम् ।
त्रयस्त्रिंशद् यथायोगं रसाना व्यभिचारिण ॥ १२९ ॥

त्रयस्त्रिंशदिति द्वन्द्वानुवादमात्रमन्येऽपि पुनः सम्भवन्ति यथा क्षुत्-तृष्णा-मैत्री-मुदिता-श्रद्धा-दयोपेक्षा-रति-सन्तोष-क्षमा-मार्दवार्जव-दाक्षिण्यादयः तथा स्थायिनोऽनुभावाश्चेति। 'यथायोगमिति' रसौचित्यानतिक्रमेण। तेन केचित् साधारणाः, केचित् पुनरसाधारणाः। एतच्च यथारसं निर्णीतमेवेति ॥ १२९ ॥

अथैषां प्रत्येकशः स्वरूपप्रतिपादकं लक्षणमुच्यते—

निर्वेदस्तत्त्वधी क्लेशैर्वैरस्य श्वास-तापकृत् ।

क्लेशा दारिद्र्य-व्याध्यपमानेर्ष्या-भ्रमाक्रोश-ताडनेष्टवियो[ग]-परविभूतिदर्शनादयः। तत्त्वज्ञानादिभिर्विभावैर्यद् वैरस्यं स निर्वेदः, स च निश्वास-सन्तापयोरुपलक्षणत्वादन्येषां च चिन्ताऽश्रु-वैवर्ण्य-दैन्यादीनामनुभावानां कारक इति। अयं च रसेष्वनियतत्वात् कादाचित्कत्वाच्च व्यभिचारी न स्थायी। एवमन्येष्वपि वाच्यम्। मम्मटस्तु व्यभिचारिकथनप्रस्तावे निर्वेदस्य शान्तरसं प्रति स्थायितां प्रतिकूलविभावादिग्रह इत्यत्र तु तमेव प्रति व्यभिचारितां च ब्रुवाणः स्ववचनविरोधेन प्रतिहत इति।

अथ ग्लानिः—

ग्लानि पीडा जराऽऽयासैरशक्ति कार्श्य-कम्पभाक् ॥ १३० ।

पीडा व्याधि-वमन-विरेक-क्षुत्-पिपासाऽऽदिभिरनेकधा काय-मनोदुःखम्। आयासो व्यायामाध्वगति-सुरतादिभि कायक्लेश-पीडा-जराऽऽयासैरुपलक्षणादन्यैश्च निद्रोच्छेद-मनस्तापादिभिर्विभावैर्योऽशक्तिः सामर्थ्याभावः सा ग्लानिः। सा च कार्श्यं कायक्षामता। कार्श्य-कम्पाद्युपलक्षणत्वात् क्षामवाक्य-मन्दपदोत्क्षेप-वैवर्ण्यमुत्साहार्दीश्चानुभावान् भजत इति ॥१३०॥

अथापस्मारः—

वैकल्य ग्रहदोषेभ्योऽपस्मारो निन्द्यचेष्टितः ।

ग्रहाः परग्रहणशीलाः पिशाचाद्याः। धातुवैषम्यं दोषः। बहुवचना-

दुच्छिष्ट-शून्यस्थानसेवनाशुचिसम्पर्कादेर्यद् वैकल्यं कृत्याकृत्याविवेचकत्वं सोऽपस्मारः । निन्द्यं विगर्हितं सहसा भूमिपात-फेनमोक्ष-निःश्वसन-धावन-प्रवेपन-स्तम्भ-स्वेदादिकं चेष्टितमत्रेति ॥

अथ शङ्का—

शङ्का स्व-परदौरात्म्याद दोलनं श्यामताऽऽदियुक् ॥ १३१ ॥

दौरात्म्यमकार्यकरणम् । उपलक्षणत्वाचास्य सादृश्यादयोऽपि विभावा ग्राह्याः । दोलनं क्षोभ-सन्देहाभ्यामनवस्थितत्वं चेतसः । आदिशब्दान्मुहुरवलोकनावगुण्ठन-मुखौष्ठ-कण्ठशोष-जिह्वापरिलेहन-वेपथु-चलदृष्टित्वादयोऽनुभावा गृह्यन्ते इति ॥ १३१ ॥

अथासूया—

द्वेषादेः सद्गुणाक्षान्तिरसूया दोषदर्शनी ।

आदिशब्दादपराध-गर्व-परसौभाग्यैश्वर्य-विद्या-लीलादर्शनादिग्रहः । सद्गुणाज्ञानक्रियादयो विशिष्टधर्माः । एषा च दोषान् वञ्चकत्वादीनसतः सतो वा दर्शयति । उपलक्षणाद् भ्रूभङ्गावज्ञा-गुणनिह्नव-मन्यु-क्रोधादयोऽनुभावा गृह्यन्त इति ॥

अथ मदः—

ज्येष्ठादौ मुन्मदो मद्याद् निद्रा-हास्यांश्रुकृत् क्रमात् ॥ १३२ ॥

ज्येष्ठ उत्तमः । आदिशब्दान्मध्यमाधमौ गृह्येते । निद्रया स्मित-मधुरास्वराग-रोमहर्षपदव्याकुलवचन-सुकुमारगत्यादयः, हास्येन स्खलन-घूर्णनबाहुस्रंसन-कुटिलगमनादयः,अश्रुणा च निष्ठीवन-जिह्वास्खलन-स्मृतिनाश-गतिभ्रंश-छर्दित-हिक्का-कफादयो गृह्यन्ते । 'क्रमादिति' उत्तमादौ यथासङ्ख्यं निद्रादयोऽनुभावाः । नाथे च रञ्जनानिमित्तमापानमपि क्वचिदभिनीयते । तत्र च मदो व्यभिचारी सम्भवति । यत् पुनः पात्रे पीतमद्यमेव प्रविशति, तस्य त्रासादिना मदोऽपनेयोऽन्यथा कार्यव्याघातः स्यादिति ॥१३२॥

अथ श्रमः—

श्रमो रतादिभिः सादः स्वेद-श्वासादिकारणम् ।

अथ मरणम्—

व्याध्यादेर्मृत्युसङ्कल्पो मरणं विकलेन्द्रियम् ॥ १३७ ॥

व्याधयो वात-पित्त-श्लेष्मवैषम्य-ज्वर-विचर्चिका-पिटकादयः । आदिशब्दाच्छस्त्राभिघात-विषपानाहिदंश-श्वापद-गज-तुरगाद्याक्रमण-वाहनोच्चस्थानपतनादेर्विभावस्य ग्रहः । मृत्युसङ्कल्पो दुष्प्रतिकारोऽयमनर्थस्तस्मादवश्यं मरिष्यामीत्यध्यवसायः । विकलानि स्वविषयग्रहणं प्रत्यसमर्थानीन्द्रियाणि यस्मिन् । उपलक्षणाद् विह्वलचेष्टित-हिक्का-निःश्वास-परिजनानवेक्षणा-व्यक्ताक्षरभाषण-वदनदैन्य-सहसाभूमिपतन-कम्पन-स्फुरण-कार्श्य-फेनजाड्य-ह[स्त]-स्कन्धभङ्गानपेक्षितगात्रसञ्चारादयोऽनुभावा गृह्यन्ते । प्राणनिरोधरूपं तु मरणं न नाट्ये प्रयोज्यमिति । न तस्य विभावानुभावस्वरूपाणि प्रतिपाद्यन्त इति ॥ १३७ ॥

अथ मोहः—

अचैतन्यं प्रहारादेर्मोहोऽत्राघूर्णनादयः ।

अचैतन्यं प्रवृत्ति-निवृत्तिज्ञानाभावो न तु सर्वथा गतचेतनत्वम् । प्रहारो मर्मण्यभिघातः आदिशब्दात् तीव्रवेदनाऽशक्यप्रतीकारचौर-राजाहि-व्याघ्राद्याक्रमण-देशविप्लवाग्न्युदकाद्युपघात-वैरिदर्शन-श्रवणादेर्विभावस्य ग्रहः । अत्र मोहे आदिशब्दाद् भ्रमण-पतनेन्द्रियाव्यापारादेरनुभावस्य ग्रहः ।

अथ निद्रा—

इन्द्रियाव्यापृतिर्निद्रा खेदादेर्मूर्द्धकम्पिनी ॥ १३८ ॥

इन्द्रियाणि स्पर्शनादीनि, न तु मनस्तस्य निद्रायामपि व्यापारात् । अव्यापृतिर्विषयग्रहणोपरतिः । आदिशब्दादालस्य-दौर्बल्य-रात्रिजागरणात्याहार-मद-श्रम-क्लम-चिन्ता-शयालुताऽऽदेर्विभावस्य ग्रहः । मूर्द्धकम्पनेन जृम्भण-वदनविकास-निःश्वास-नेत्रघूर्णनाङ्गभङ्गाक्षिमीलन-सर्वक्रियासम्मोहादयोऽनुभावा उपलक्ष्यन्त इति ॥ १३८ ॥

अथ सुप्तम्—

सुप्तं निद्राप्रकर्षोऽस्य स्वप्नायित-समोहने ।

नवनवोन्मेषशालिनी प्रज्ञा प्रतिमानम् । शास्त्रं शास्त्रविषयं चिन्तनम् । तर्को विधि-निषेधविषयौ सम्भावनाप्रत्ययावन्वय-व्यतिरेकप्रत्ययौ वा । भ्रान्तिः संशयो विपर्ययो वा । आदिशब्दादुपदेशादिग्रह इति ॥

अथ व्याधिः—

दोषेभ्योऽङ्ग-मनःक्लेशो व्याधिः स्तनित-कम्पवान् ॥ १३५ ॥

दोषाः कफ-वात-पित्त-सन्निपातादयः । स्तनितमार्तस्वरः । उपलक्षणान्मुखशोष दन्तवीणावादन शीताभिलाषविक्षिप्ताङ्गता । सन्तापादयोऽप्यनुभावा गृह्यन्त इति ॥ १३५ ॥

अथ स्मृतिः—

दृष्टाभास स्मृतिस्तुल्यदृष्ट्यादेर्भ्रूनतिक्रिया ।

दृष्टाभासः पूर्वं दृष्टमिति ज्ञानम् । तुल्यदृष्टिः सदृशदर्शनम् । आदिशब्दात् सदृशश्रवण-चिन्तन-संस्कार-रात्रिपश्चादुभागनिद्रोच्छेद-प्रणिधान-पुनःपुनःपरिशीलनपूर्वं दर्शनपाटवादेर्विभावस्य ग्रहः । भ्रूनतेर्भ्रुव ऊर्ध्वक्षेपस्योपलक्षणाच्छिरःकम्पनावलोकनादेश्चानुभावस्य क्रियानिष्पत्तिर्यस्याः सा तथेति ॥

अथ धृतिः—

धृतिर्ज्ञानेष्टलाभादे सन्तुष्टिर्देहपुष्टिकृत् ॥ १३६ ॥

ज्ञानं विवेकज्ञानं बाहुश्रुत्यं वा । इष्टस्येप्सितस्य लाभः प्राप्तिः । आदिशब्दाच्छौचाचरण-क्रीडा-देवतादिभक्ति विशिष्टशक्त्यादेर्विभावस्य ग्रहः। देहपुष्टिरुपलक्षणं गतानुशोचनादीनामनुभावानामिति ॥ १३६ ॥

अथामर्षः—

*क्षेपादे प्रतिकारेच्छाऽमर्षोऽस्मिन् कम्पनादयः ।*

क्षेपस्तिरस्कारः, आदिशब्दादपमानादेर्विभावस्य ग्रहः । अपकारिणि स्वयमपकरणाभिलाषः । प्रतिकारेच्छा परस्यापकाराभावेऽपि परानर्थकरणाभिप्रायरूपः क्रोध इत्यनयोर्भेदः । अस्मिन्नमर्षे आदिशब्दादधोमुखचिन्तन-प्रस्वेदोत्साह-ध्यानोपायान्वेषण-तर्जन ताडनादीनामनुभावानां ग्रह इति ॥

अथ मरणम्—

व्याध्यादेर्मृत्युसङ्कल्पो मरण विकलेन्द्रियम् ॥ १३७ ॥

व्याधयो वात-पित्त-श्लेष्मवैषम्य-ज्वर-विचर्चिका-पिटकादयः । आदिशब्दाच्छस्त्राभिघात-विषपानाहिदंश-श्वापद-गज-तुरगाद्याक्रमण-वाहनोच्चस्थानपतनादेर्विभावस्य ग्रहः । मृत्युसङ्कल्पो दुष्प्रतिकारोऽयमनर्थस्तस्मादवश्यं मरिष्यामीत्यध्यवसायः । विकलानि स्वविषयग्रहणं प्रत्यसमर्थानीन्द्रियाणि यस्मिन् । उपलक्षणाद् विह्वलचेष्टित-हिक्का निःश्वास-परिजनानवेक्षणाव्यक्ताक्षरभाषण-वदनदैन्य-सहसाभूमिपतन-कम्पन-स्फुरण-कार्श्य-फेनजाड्य-ह[स्त]-स्कन्धभङ्गानपेक्षितगात्रसञ्चारादयोऽनुभावा गृह्यन्ते । प्राणनिरोधरूपं तु मरणं न नाट्ये प्रयोज्यमिति । न तस्य विभावानुभावस्वरूपाणि प्रतिपाद्यन्त इति ॥ १३७ ॥

अथ मोहः—

अचैतन्यं प्रहारादेर्मोहोऽत्राघूर्णनादयः ।

अचैतन्यं प्रवृत्ति-निवृत्तिज्ञानाभावो न तु सर्वथा गतचेतनत्वम् । प्रहारो मर्मण्यभिघातः आदिशब्दात् तीव्रवेदनाऽशक्यप्रतीकारचौर-राजाहिव्याघ्राद्याक्रमण-देशविप्लवाग्न्युदकाद्युपघात-वैरिदर्शन-श्रवणादेर्विभावस्य ग्रहः । अत्र मोहे आदिशब्दाद् भ्रमण-पतनेन्द्रियाव्यापारादेरनुभावस्य ग्रहः ।

अथ निद्रा—

इन्द्रियाव्याप्टतिर्निद्रा खेदादेर्मूर्द्धकम्पिनी ॥ १३८ ॥

इन्द्रियाणि स्पर्शनादीनि, न तु मनस्तस्य निद्रायामपि व्यापारात् । अव्यापृतिर्विषयग्रहणोपरतिः । आदिशब्दादालस्य दौर्बल्य-रात्रिजागरणात्याहार-मद-श्रम-क्लम-चिन्ता-शयालुताऽऽदेर्विभावस्य ग्रहः । मूर्द्धकम्पनेन जृम्भण-वदनविकास-निःश्वास-नेत्रघूर्णनाङ्गभङ्गाक्षिमीलन-सर्वेक्रियासम्मोहादयोऽनुभावा उपलक्ष्यन्त इति ॥ १३८ ॥

अथ सुप्तम्—

सुप्तं निद्राप्रकर्षोऽत्र स्वप्नायित-समोहने ।

प्रकर्षो गाढतमावस्था स्वमस्य तात्कालिकविषयज्ञानस्य आयितं प्रतीतिर्यतस्तत् स्वमायितं प्रलपितम् । खानां मनःषष्ठानामिन्द्रियाणां मोहनमतिशयेन विषयवैमुख्यं निद्राया मनसोऽवधानमस्ति, अत्र तु तदपि मनागुपरुध्यत इति भेदः । विभावास्तु निद्रागता एवात्र ग्राह्याः ॥

अथौग्र्यम्—

दुष्टेऽपराधाद्नैर्घृण्यमौग्र्यं बन्ध-वधादिभि ॥ १३९ ॥

दुष्टे हिंस्रत्वानृतवादित्व-वञ्चकत्वादियुक्ते अपराधादकार्यकारित्वाद् दौर्मुख्य-चौर्यादिरूपाद् विभावाद् यद् राजादेर्नैर्घृण्यं निर्दयत्व तदौग्र्यं तच्च वध-बन्धाभ्यामादिशब्दात् ताडन-निर्भर्त्सन-स्वेद-शिर:कम्पादि[ भि ]-रनुभावैरभिनेतव्यमिति ॥ १३९ ॥

अथ हर्षः—

हर्ष प्रसत्तिरिष्टाप्तेरत्र स्वेदाश्रु-गद्गदा ।

प्रसत्तिश्चेतोविकासः । इष्टं प्रियसंयोगाप्रियसंयोगनिवृत्ति-देव-गुरु-राज-भर्तृप्रसाद-भोजनाच्छादन-धन-पुत्रादिलाभ-पुत्रादिगतहर्षविषयोपभोगोत्सवादि । गद्गदो बाष्परुद्धकण्ठस्य वाक् । उपलक्षणात् पुलक-प्रियभाषण-नेत्रमुखप्रसादादेरनुभावस्य ग्रह इति ॥

अथ विषादः—

विषादस्तान्तिरिष्टस्यानाप्तेर्निःश्वास-चिन्तने ॥ १४० ॥

तान्तिरनुत्साहाक्रान्तचित्तसन्तापः । इष्टं प्रारब्धनिर्वहण-दैवाप्रतिकूलत्वादि तस्यानाप्तिरलाभो विपरीतलाभो वा चिन्तनमुपायानाम् । बहुवचनात् सहायान्वेषण-वैमनस्यादिभिर्मध्यमोत्तमगतैर्मुखशोष-निद्रा-ध्यान-जिह्वापरिलेहनादिभिस्त्वधमगतैरनुभावैरभिनीयत इति ॥ १४० ॥

अथोन्मादः—

मनोविप्लुतिरुन्मादो ग्रह-दोषैरयुक्तकृत् ।

विप्लुतिर्विसंस्थुलता क्वचिदप्यविश्रान्तिरिति यावत् । ग्रह-दोषाव-

पस्मारे व्याख्यातौ। अयुक्तमनुचितं गीत-नृत्त-पठितोत्थित-शयित-प्रधावित-रुदिताक्रुष्टासम्बद्धप्रलापनानिमित्तहसित-भस्म-पांस्ववधूलन-निर्माल्य-चीरघटवक्त्र-शरावाभरणोपभोगादि। अयं चोत्तमस्य विप्रलम्भेऽधमस्य करुणे व्यभिचारी। अपस्मारस्तु बीभत्स-भयानकयोः। स च मनोवैकल्यमयं तु मनोऽनवस्थितिरिति भेद इति॥

अथ दैन्यम्—

आपदः स्वान्तनीचत्वं दैन्यं काष्र्ण्यावगुण्ठनैः॥ १४१॥

आपदो दौर्गत्य-न्यक्कारादेः। स्वान्तनीचत्वं मनःक्लैव्यम्। कार्ष्ण्यं वदनश्यामता। अवगुण्ठनं शिरो-गात्रवरणम्। बहुवचनाच्छरीरासंस्कार-गौरवपरिहार-वस्त्रमालिन्याद्यैश्चानुभावैरभिनेतव्यमिति॥ १४१॥

अथ व्रीडा—

व्रीडाऽनुतापगुर्वादेरधार्ष्ट्यं गात्रगोपकम्।

अकृत्यकरणादनु पश्चात् तापो मानसो विवेकः। गुरुर्माता-पित्रादिः। आदिशब्दात् प्रतिज्ञातानिर्वहण-गुरुव्यतिक्रमावज्ञानासंस्तवादेर्विभावस्य ग्रहः। अधार्ष्ट्यमवैयात्यम्। गात्रगोपनेनोपलक्षणादधोमुखचिन्तन-नखनिस्तोदन-भूविलेखन-वस्त्राङ्गुलीय-स्पर्शनादेरनुभावस्य ग्रह इति॥

अथ त्रासः—

घोराच्चकित[ता] त्रासः कायसङ्कोच-कम्पितैः॥ १४२॥

घोरं भीषणं निर्घाताशनिपात-महाभैरवनाद-महारौद्रसत्त्वशवदर्शनादि। चकितत्वोद्वेगकारी चमत्कारः। अनर्थसम्भावनातः सत्त्वभ्रंशो भयमित्यनयोर्भेदः। बहुवचनात् स्तम्भ-रोमाञ्च-मूर्च्छा-गद्गदवचनादिभिश्चायमनुभावैरभिनीयत इति॥ १४२॥

अथ तर्कः—

एकसम्भावनं तर्को वादादेरङ्गनर्तकः।

वादो विप्रतिपत्तिस्तस्मादादिग्रहणात् सन्देहबाधकबलोद्भूतपक्षान्त-

रामावज्ञानविशेषप्रतीत्यभिलापादेर्विभावाद् यद्येकस्य पक्षस्य सम्भावनं भवितव्यमनेनेति प्रत्ययः स तर्कः । अङ्गस्य भ्रू–शिरोऽङ्गुल्यादेर्नर्त्तक इति ।

अथ गर्वः—

आत्मन्याधिक्यधीर्गर्वो विद्याऽऽदेरन्यरीढया ॥ १४३ ॥

आधिक्यधीः परजुगुप्साक्रान्तः स्वस्मिन् बहुमानः। आदिशब्दाज्जाति-कुल-लाभ-बुद्धि-वाल्लभ्य-यौवनैश्वर्यादेर्विभावस्य ग्रहः । रीढाऽवज्ञा तया उपलक्षणात् पारुष्यासूया-धर्षणानुत्तरदानाङ्गावलोकनोपहसनालङ्कार–व्यत्यासादिभिश्चानुभावैरभिनेतव्य इति ॥ १४३ ॥

अथौत्सुक्यम्—

इष्टाभिमुख्यमौत्सुक्यं स्मरणाद्यात् त्वराऽऽदिभिः ।

आभिमुख्यमौत्सुक्यं स्मरणमिष्टस्य । आद्यशब्दान्मनोज्ञादिदृक्षाऽभिष्वङ्ग-लोभादेर्विभावस्य ग्रहः । त्वरा मनो–वाक्–काय–दृष्टिचापलम् । आदि–शब्दात् कृत्यविस्मरण–दीर्घनिःश्वासासम्बद्धवचन–स्वेद–हृत्तापादेरनुभावस्य ग्रह इति ॥

अथावहित्थम्—

धार्ष्ट्याद्देर्विक्रियारोधोऽवहित्थाऽत्र क्रियान्तरम् ॥ १४४ ॥

धार्ष्ट्यं प्रागल्भ्यम् । आदिशब्दाद् भय–लज्जा-गौरव-कुटिलाशयत्वादेर्विभावस्य ग्रहः । सर्वानुगतत्वख्यापनार्थं धार्ष्ट्यं प्रथममुपात्तम् । समयादेरपि ह्यप्रगल्भो न शक्नोत्याकारं संवरीतुम् । विक्रिया भ्रूविकार-मुखरागादिका तस्या रोधः संवरणम् । रोधकारकत्वेनोपचाराच्चित्तविशेषोऽपि रोधः, न बहिःस्था चित्तवृत्तिरिति पृषोदरादित्वादवहित्था । अत्रावहित्थायां प्रस्तुतक्रियातोऽन्यकथनावलोकनकथाभङ्गकृतकस्थैर्यादिकं क्रियान्तरमिति ॥ १४४ ॥

अथ जाड्यम्—

जाड्यमिष्टादित कार्याज्ञानं मौनानिमेषणे ।

इष्टं प्रियं तस्य दर्शन–श्रवणे अपीष्टे । आदिशब्दादानिष्टदर्शन–श्रवण–व्या-

ध्यादेर्विभावस्य ग्रहः। कार्याज्ञानं नेत्राभ्यां पश्यतोऽपि श्रोत्राभ्यां शृण्वतोऽपि चेदानीं किं कृत्यमित्यनिश्चयः। नेदं वैकल्याचैतन्यस्वभावमित्यपस्मार-मोहाभ्यां भिन्नम्। मौनं तूष्णीम्भावः। अनिमेषणं अनिमेषनिरीक्षणम्। बहुवचनात् परवशत्वादिभिरनुभावैरभिनेतव्यमिति ॥

अथालस्यम्—

कर्मानुत्साह आलस्यं श्रमाद्याज्जृम्भितादिभिः ॥ १४९ ॥

आदिशब्दात् सौहित्य-स्वभाव-व्याधि-गर्भादिभिर्विभावैः स्त्री-नीचा-नामनुद्यमरूपमालस्यं भवति। श्रमस्य व्यभिचारित्वेऽप्यन्यव्यभिचारिणं प्रति विभावत्वे न दोषः, व्यभिचारिता तु परस्परं व्यभिचारिणां स्थायित्वप्रसङ्गाद् दुष्टैव। एवं व्यभिचारिणामनुभावत्वमपि भवत्येव। जृम्भितेनादिशब्दादासि-तेनाहारवर्जितपुरुषार्थानारम्भादिभिश्चानुभावैस्तदभिनेतव्यम्। अलसोऽपि हा(ह्य)वश्यमाहारं करोत्येवेति ॥ १४५ ॥

अथ विबोधः—

निद्राच्छेदो विबोधश्च शब्दादेरङ्गभङ्गवान्।

आदिशब्दात् स्पर्श-स्वप्नान्ताहारपरिणामादेर्विभावस्य ग्रहः। उपलक्ष-णात् जृम्भाक्षिविमर्दन-शयन-मोक्षण-भुजाक्षेपाङ्गुलित्रोटनादिरनुभावो द्रष्ट-व्यः। पर्यन्ते चकारः सर्वव्यभिचारिसमुच्चयार्थ इति ॥

अथैषां रसादीनां मध्ये केषाञ्चित् परस्परं कार्यकारणतामाह—

केषाञ्चित् तु रसादीनामन्योन्यं हेतुकार्यता ॥ १४६ ॥

आदिशब्दाद् व्यभिचारिणां यथा वीरादद्भुतः। महापुरुषोत्साहो हि जगद्विस्मये फले साक्षादनुसन्धत्ते। तथा द्रौपदीस्वयंवरादौ वीराच्छृङ्गारोऽपि रौद्राच वधबन्धादिफलानन्तरं करुण-भयानकौ। तथा सर्वरसेभ्योऽनन्तरं सर्वे सजातीया रसा भवन्ति। यथा शृङ्गारिणं दृष्ट्वा शृङ्गारः, हसन्तं दृष्ट्वा हास्य इत्येवं सर्वरसेषु हेतुफलभावो वाच्यः। सर्वरसानां चाभासा अनौचित्य-प्रवृत्तत्वाद् हास्यरसस्य कारणम्। रावणस्य ह्यविषयप्रवृत्तत्वात् शृङ्गाराभासः सतां हास्यमुपजनयति। हास्याभासादपि हास्यो भवति। यथा—

" लोकोत्तराणि चरितानि न लोक एव
सम्मन्यते यदि किमङ्ग ! वदाम नाम ? ।
यत् त्वत्र हासमुरसत्वमनु(मु)प्य तेन
पार्श्वोपपीडमिह को न विजाहसीति ? ॥ "

[ वामनगुप्तस्यैतदित्यभिनवगुप्तः नाट्यशास्त्रव्या० अ. ६, ४४ ]

व्यभिचारिणामप्युत्पाद्योत्पादकभावो यथा व्याधेर्निर्वेदः, चिन्ता-वियोगाभ्यां स्मृतिः, श्रमादालस्यमित्यादि । व्यभिचार्याभासादप्यनौचित्य-प्रवृत्ताद् हास्यो भवतीति ॥ १४६ ॥

अथ रसानां स्थायिनां व्यभिचारिणामनुभावानां च कार्यभूताननु-भावान् प्रतिपादयति—

वेपथु-स्तम्भ-रोमाञ्चाः स्वरभेदोऽश्रु मूर्छनम् ।
स्वेदो वैवर्ण्यमित्याद्या अनुभावा रसादिगाः ॥ १४७ ॥

आद्यशब्दात् प्रसादोच्छ्वास-निःश्वास-क्रन्दन-परिदेवितोल्लुकसन-भूमिविलेखन-विवर्तनोद्वर्त्तन-नखनिस्तोदन-भ्रुकुटिकटाक्ष-तिर्यगधोमुख-निरीक्षण-प्रशंसन-हसन-दान-चाटुकारास्यरागादयः कश्चित् स्थायिनो व्यभिचारिणश्च यथायोगं रसानां स्थायिनां व्यभिचारिणामनुभावानां च सहस्रसङ्ख्या अनुभावा इति ॥ १४७ ॥

अथ ते प्रत्येकशो लक्ष्यन्ते । तत्र वेपथुः—

भयादेर्वेपथुर्गात्रस्पन्दो वागादिविक्रियः ।

आदिशब्दाद् रोग-हर्ष-शीत-रोप-प्रियस्पर्शादेर्विभावस्य ग्रहः । स्पन्दः किञ्चिच्चलनम् । वागादेरादिशब्दाद् गतिचेष्टादेर्विक्रिया यस्मादित्यनुभाव-कथनमिति ॥

अथ स्तम्भः—

यत्नेऽप्यङ्गाक्रिया स्तम्भो हर्षादेर्हा ! विषादवान् ॥ १४८ ॥

अङ्गानां हस्त-पादादीनामन्तःपरिस्पन्देऽप्यक्रिया चलनाभावः स्तम्भः । आदिशब्दाद् विस्मय-भय-मद-रोगादेर्विभावस्य ग्रह इति ॥ १४८ ॥

अथ रोमाञ्चः—

रोमाञ्चः प्रियदृष्ट्यादे रोमहर्षोऽङ्गमार्जनैः ।

आदिशब्दाद् व्याधि-शीत-क्रोध-स्पर्शादेर्विभावस्य ग्रहः । बहुवचनादङ्गभेदुर-प्रमुख-नेत्रविकास-दन्तवीणावादनादिभिरभिनेतव्यः ॥

अथ स्वरभेदः—

स्वरभेदः स्वरान्यत्वं मदादेर्हर्ष-हास्यकृत ॥ १४९ ॥

अन्यत्वमुपचयापचयाभ्यां भेदः । आदिशब्दाद् भय-जरा-हर्ष-क्रोध-राग-रौक्ष्यादेर्विभावस्य ग्रहः । उपलक्षणाद् व्रीडा-निर्वेदादयोऽप्यनुभावा द्रष्टव्या इति ॥ १४९ ॥

अथाश्रु—

अश्रु नेत्राम्बु शोकाद्यैर्नासास्पन्दाक्षिरूक्षणैः ।

आद्यशब्दादनिमेषप्रेक्षणान(म)न्दामर्ष-धूमाञ्जन-जृम्भण-भय-पीडा-हास्यादेर्विभावस्य ग्रहः । नासायाः स्पन्दः श्लेष्मस्रवणम् । बहुवचनान्निष्ठीवन-गद्गदस्वरादेरनुभावस्य ग्रह इति ॥

अथ मूर्छनम्—

मूर्छनं घात-कोपाद्यैः खग्लानिर्भूमिपातकृत् ॥ १५० ॥

आद्यशब्दाद् मदादेर्विभावस्य ग्रहः । खग्लानिरिन्द्रियाणामभिभवः । उपलक्षणात् स्वेद-श्वासादयोऽप्यनुभावा इति ॥ १५० ॥

अथ स्वेदः—

स्वेदो रोम-जलस्रावः श्रमादेर्व्यजनग्रहैः ।

आदिशब्दाद् भय-हर्ष-लज्जा-रोग-ताप-ग्रह-दुःख-धर्म-व्यायामादेर्विभावस्य ग्रहः । बहुवचनाद् वाताभिलाप-स्वेदापनयनादिभिरप्यभिनेतव्य इति ॥

अथ वैवर्ण्यम्—

छायाविकारो वैवर्ण्यं क्षेपादेर्दिगुनिरीक्षणैः ॥ १५१ ॥

छाया शोभा तस्या विकारो विरूपत्वम् । क्षेपस्तिरस्कारः । आदि-शब्दात् सन्ताप-भय-क्रोध-व्याधि-शीत-श्रम-तीव्रांशुकरादेर्विभावस्य ग्रहः । बहुवचनाद्वसनिस्तोदन-क्रीडाऽऽदिभिरप्यभिनेतव्यमिति ॥ १५१ ॥

अथ रस-भावानन्तरोद्दिष्टस्याभिनयस्यावसरः । स च वाचिकाङ्गिक-सात्त्विकाहार्यभेदैश्चतुर्द्धा । तत्र प्रथमं वाचिकं लक्षयति—

वाचिकोऽभिनयो वाचां यथाभावनुक्रिया ।

वागनुकार्या प्रयोजनं हेतुरस्येति "प्रयोजनम्" [हैम०६।४।११७] इतीकणि वाचिकः । सामाजिकानामाभिमुख्येन साक्षात्कारेण नीयते प्राप्यते अर्थोऽनेनेत्यभिनयः । वाचां संस्कृत-प्राकृतादीनां सार्थिकानामनर्थिकानां वा यथाभावं क्रोधाहङ्कारजुगुप्सोत्साह-विस्मय-हास-रति-भय-शोक-सुख-दुःख-मोह-लोभ-मायाऽसूयाशङ्काऽऽदीनां वेपथु-स्तम्भ-रोमाञ्च-मूर्छा-वैवर्ण्य-प्रसादादीनां वा भावानामनतिक्रमेण । तथा च कवयः सक्रोधं सावेगमित्यादीन्यनुकार्यभावप्रकाशकानि क्रियाविशेषणान्युपनिबध्नन्ति । तेनैकेनोक्तमपरस्यायथाभावमनुवदतोऽनुवाद एव न वाचिकोऽभिनय इति । अनुक्रिया च वागादीनां तदध्यवसायवशान्न पुनर्वस्तुतः । रामादेरनुकार्यस्य नटेन प्रेक्षकैर्वा स्वयमदृष्टत्वात् । अनुकर्ता ह्यनुकार्यमदृष्ट्वा नानुकर्तुमलम् । प्रेक्षकोऽपि चादृष्टानुकार्यो नानुकर्तुरनुकर्तृत्वमनुमन्यते । तदयं नटो रामादेश्चरितं कविनिबद्धमधीत्यात्यन्ताभ्यासवशतः स्वयं दृष्टमनुमन्यमानोऽनुकरोमीत्यध्यवस्यति । परमार्थतस्तु लोकव्यवहारमेवायमनुवर्तते । प्रहृष्टोऽपि हि रामेण रुदिते रोदिति, न तु हसति । विषण्णोऽपि च हसिते हसति, न तु रोदि[ती]त्यादि । प्रेक्षका अपि रामादिशब्द-सङ्केतश्रवणादतिहृद्यसङ्गीतकाहितवैवश्याच्च स्वरूप-देश-कालभेदेनातथाभूतेष्वप्यभिनेयचतुष्टयाच्छादनात् तथाभूतेष्विव न ते(टे)षु रामादीनध्यवस्यति । अत एव तासु तासु सुख-दुःखरूपासु रामाद्यवस्थासु तन्मयीभवति । अपरे तेषु तु नामसङ्केत-सङ्गीतकाभिनयेषु रामाद्यध्यवसायहेतुषूपदेशपरमेतदिति मन्यमाना हेयोपादेय-हानोपादानैकतानचेतसो जायन्ते । अथवा इह ता- स्थभाकृतिरित्थं गतिरित्थं जल्पितमित्थं क्रोधादिललितमित्ये- रामादिललितरूपीणां कालदर्शिना ज्ञानेन निश्चितं कवयो- न्ति । तत्र चार्थे मुनिज्ञानविश्वासान्नटस्य साक्षाद्

म्भा-कारस्य(र्श्य)-मेदुरत्वोल्लुकसनावहित्थ-सावधानता-लाला-फेनमोक्ष-गात्रस्रंसन-हिक्कादेर्ग्रहः। नायमभिनयो वाचिकः, शब्दाननुकारात्। नाप्याङ्गिकः, अङ्गोपाङ्गसाध्यस्पष्टचेष्टाया अभावादिति। स्वरभेदाद्यनुभावप्रदर्शनं रसोत्तम-मध्यमाधमप्रकृत्यादौ(द्यौ)चित्यानुसारतो द्रष्टव्यमिति ॥

अथाहार्यः—

वर्णाद्यनुक्रियाऽऽहार्यो बाह्यवस्तुनिमित्तकः ॥ १९३ ॥

वर्णः श्वेतादिः, आदिशब्दाद् रसगन्धाकल्पायुध-वाहनाङ्गाधिक्य-केश-नदी-नगर-वन-पक्षि-द्विपद-चतुष्पदापद-प्रासाद-पर्वतादेर्ग्रहः। बाह्यं शरीरव्यतिरिक्तं भस्म-धातु-जतु-राग-हरिताल-मषी-मृत्तिका-वस्त्र-वेणु-दलादिकं निमित्तमस्येति। वाचिकादयस्तु शरीरनिमित्ता इति भेदः। अयं च देश-काल-कुल-प्रकृति-दशा-स्त्रीत्व-पुंस्त्व-षण्ढत्वादौचित्यानुसारतो विधेय इति। यस्तु पञ्चमश्चित्राभिनयः प्रोक्तः सोऽप्यङ्गोपाङ्गकर्मविशेषरूपत्वादाङ्गिक एवान्तर्भवति। अभिनयद्वय-त्रय-चतुष्टयसन्निपातरूपः। सामान्याभिनयः पुनर्वाचिकादिलक्षणेनैव चरितार्थ इति ॥ १५३ ॥

इति श्रीरामचन्द्र-गुणचन्द्रविरचितायां स्वोपज्ञनाट्यदर्पणविवृतौ वृत्ति-रस-भावाभिनयविचारस्तृतीयो विवेकः ॥ ३ ॥



दीनि करणान्यष्टोत्तरं शतमित्यादिः सर्वोऽपि चेष्टाविषयोऽङ्गोपाङ्गप्रभवत्वादाङ्गिक एवाभिनयः। गतयोऽप्येवम्। तत्रोत्तम-मध्यम-नीचानां क्रमेण धीरा मध्यमा द्रुता च सामान्येन गतिः। विशेषस्तु वृद्ध-व्याधित-क्षुधित-श्रान्त-तपःक्रान्त-क्षुभित-सावहित्थ-शोक-शृङ्गारान्वित-स्वच्छन्दादीनां मन्थरा। हर्षावेगकुतूहल-भयौत्सुक्यादिमतां त्वरिता। प्रच्छन्नकामुक-वैरि-चौर-रौद्रसत्त्वादिशङ्कितादीनां निःशब्दपदसञ्चारा उन्मार्गा दिगवलोकनवती च। सी(शी)त-वर्षार्दितयोः कम्पमाना सम्पीडिताङ्गा। घर्मार्तस्य स्वेदापनयना च्छायावलोकनवती। प्रहारार्त-स्थूलयोरङ्गाकर्षण-श्वासवती स्थिरा च। यतिनां नेत्राचापल्य-पुरतोयुगमात्रनिरीक्षणवती। उन्मत्त-मत्तयोर्विघूर्णितनेत्रा स्खलिता च। विदूषकस्यासम्बद्धेक्षणवती। जले पादविकर्षवती, प्रतरणे जठर-शय-काया-बाहुभ्यां जलविपाटनवती च। जलह्रियमाणस्य तु विसंस्थुलाङ्ग-केश-वसनवती। अन्धान्धकारगतयोराकृष्यमाणमन्दपदा पुरःप्रसारितविलोलहस्ता च। आरोहणे ऊर्ध्वावलोकनपरा, विपरीता त्ववरोहणे। आकाशे समाभ्यां पादाभ्यां वाहनैः पक्षाभ्यां वा। आकाशान्यतो विसंस्थुलाङ्गकेशांशुकेत्याद्यनेको गतिप्रकार इति। तथा रूपस्य शिरसि हस्तौ कृत्वा किञ्चिदास्यचालनानिमिषप्रेक्षणाभ्याम्, शब्दस्य शिरसा पार्श्वनतेन, स्पर्शशेप(स्य) नेत्राकुञ्चनेन, रस-गन्धयोश्चैकोच्छ्वासेनाभिनयः। सर्वोऽपि चाभिनय इष्टो मध्योऽनिष्टश्चेति त्रिप्रकारः। तत्रेष्टः सौमुख्य-प्र(पु)लकगात्र-नेत्रविकासादिना क्रियते, मध्यो माध्यस्थ्येन, अनिष्टः शिरःपरावर्तन-नेत्र-नासाविकोणनादिति। चतुर्विधश्चात्र मुखरागः प्रसन्नः स्वाभाविको रक्तः श्यामश्चेति रसौचित्यानतिक्रमेण भवति। यदपि सर्वशरीरसाध्यं भूपातादिकं तदप्याङ्गिक एव, अङ्गोपाङ्गरूपत्वाच्छरीरस्येति ॥ १५२ ॥

अथ सात्त्विकः—

सात्त्विक स्वरभेदादेरनुभावस्य दर्शनम्।

अवहितं मनः सत्त्वं तत् प्रयोजनं हेतुरस्येति सात्त्विकः। मनोऽनवधाने हि न शक्यन्त एव स्वरभेदादयो नटेन दर्शयितुम्। आदिशब्दाद् वेपथु-स्तम्भ-रोमाञ्च-मूर्छन-स्वेद-वैवर्ण्याश्रु-निःश्वासोच्छ्वास-सन्ताप-शैत्य-जृ-

अत्र द्वादशावान्तरार्शार्वाक्यानि । पड्भिरिति त्र्यस्रमष्टभिरिति चतुरस्रं रङ्गापेक्ष्यमध्यमनान्या निर्देशः । त्र्यस्ररङ्गे चोत्तमा द्वादशभिरधमा त्रिभिः पदैर्नान्दी । चतुरस्ररङ्गे पुनरुत्तमा षोडशभिरधमा चतुर्भिरिति । नान्दी च पूर्वरङ्गाङ्गानां द्वादशमङ्गं सकलपूर्वरङ्गाङ्गोपालक्षिका, तेन नान्द्यन्ते सूत्रधार इत्यस्य सकलपूर्वरङ्गाङ्गानि तु केषांचिल्लोकप्रसिद्धत्वात् केषांचिन्निष्फलत्वात् केषांचिदनवश्यम्भावित्वाच्च न लक्ष्यन्ते । नान्दी त्ववश्यम्भावित्वान्मङ्गलाभिधानपूर्वकत्वाच्च शुभकृत्यारम्भस्येति लक्षिता । अत एव कवयो रूपकारम्भे 'नान्द्यन्ते सूत्रधारः' इति पठन्ति । यत्र तु कविकृता नान्दी न दृश्यते तत्रापि रङ्गसूत्रणाकर्तृकृता द्रष्टव्या । नान्दीपाठकाश्च सूत्रधार-स्थापक-पारिपार्श्विका इति ॥ १५४ ॥

अथ ध्रुवा लक्ष्यते—

प्रवेश-निष्क्रमाक्षेप-प्रसादान्तरसङ्गतम् ।
चित्रार्थं रूपकं गेयं पञ्चधा स्यात् कविध्रुवा ॥ १९९ ॥

रूपकं कविध्रुवेति सम्बन्धः । प्रविशतः पात्रस्य रस-भाव-प्रकृत्यवस्थाऽऽदिकं प्रवेशशब्देनोच्यते । तदनुसारेण श्लेष-समासोक्त्याद्यलङ्कृतं यद् रूपकं गीयते सा प्रवेशः प्रयोजनमस्या इतीकणि प्रावेशिकी ।

यथा अनर्घराघवे—

" ' दिणयरकिरणुक्केरो पिपायरो को वि जीवलोपस्स ।
कमलमउलंकवालीकयमहुअरकङ्कुणविपङ्कौ । ' "

इयं स्वाध्वरसंरक्षणार्थं रामाकर्षणाय आगच्छतो विश्वामित्रस्य आदित्योदयवर्णनाव्याजेन प्रवेशध्रुविका ।

यथा वा देवीचन्द्रगुप्ते पञ्चमेऽङ्के—

## अथ चतुर्थो विवेकः ।

---

अतः परं सर्वरूपकोपयोगि किञ्चिदुच्यते—

देव भूप-सभा भर्तृमुख्यानां मङ्गलाभिधा ।
नित्या रूपमुखे नान्दी पदैः षड्भिरथाष्टभिः ॥ १५४ ॥

मुख्यग्रहणं सरस्वती–कविप्रभृतीनामुपलक्षणार्थम् । मङ्गलाभिधा सद्भूतगुणोत्कीर्तनमाशीर्वचनं वा । नित्यैवंविधरूपैव, अपरेषां तु पाठ्याना-मुत्थापनादीनां पूर्वरङ्गाङ्गानां प्रयोगवशादन्यथात्वमपि भवति, अवश्यम्भा-वाद् वा नित्यत्वम्, शेषाणां हि रङ्गाङ्गानां नावश्यम्भावः । अहरहः-प्रयोज्यत्वाद् वा नित्यत्वम् । यावद्धि रूपकस्याभिनयस्तावदेषा नान्दी प्र-योक्तव्यैव । रूपकस्य नाटकादेर्मुखे प्रारम्भे नान्दी प्रयोगस्थानकथनमेतद् । नान्दीत्वं च मङ्गलाभिधायाः प्रत्यूहापसारणेन समृद्धिजनकत्वात् । पदानि वाक्याङ्गानि । केचित् तु पूर्णवाक्यापेक्षयाऽवान्तरवाक्यानि पदानीत्याहुः । तथा च भरतमुनिर्नान्दीं पठति [ नाट्यशास्त्रे अ० ५, ११०–११३ ]—

" नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यश्च वै मन (नमः) ।
जितं सोमेन वै राज्ञा शिवं गो–ब्राह्मणाय च ॥
ब्रह्मोत्तरं तथैवास्तु हता ब्रह्मद्विषस्तथा ।
प्रशास्त्विमां महाराजः पृथिवीं चससागराम् ॥
राष्ट्रं प्रवर्धतां चैव रङ्गस्याशा समृध्यतु ।
प्रेक्षाकर्तुर्महान् धर्मो भवतु ब्रह्मभाषितम् ॥
काव्यकर्तुर्यशश्चापि धर्मश्चापि प्रवर्धताम् ।
इज्यया चानया नित्यं प्रीयन्तां देवता इति ॥ "

अन्तरं छिद्रं तत्र भवा आन्तरी अनुकर्तुर्यदा अनाशङ्कित एव धनविधातादिना विघात उद्धतप्रयोगश्रमाद् वा मूर्छा-श्रमादिसम्भावना वस्त्राभरणादेर्वा प्रच्युतिस्तदा तत्संवरणावकाशदित्सयेयं गीयते। अस्यां च प्राक्तनं भावि वा र[स]स्य स्वरूपमनुवर्त्यम्। छिद्राच्छादनमात्रप्रयोजनत्वाच्चास्या न सार्थकपद(ठ)नासनमुपयोगीति शुष्काक्षराण्येवास्यां निबध्यन्ते।

सङ्गतं प्रवेशाद्यनुरूपार्थम्। चित्रो नानाप्रकारः सरः-काननादि-दिवस-रात्रि-सन्ध्याऽऽदिरुत्तम-मध्यमाधमप्रकृतिर्गज-वाजि-सिंहादिर्भावो रत्यादिकश्चार्थो यत्र। अर्थश्च तथा निबन्धनीयो यथोपश्रुतिशकुनन्यायेन प्रत्ययेन प्रस्तुतोपयोगी भवति रूपकं नियतमात्राक्षरं छन्दः। गेयं स्वरतालैर्गानार्हम्। पञ्चधा प्रवेशादिभिः पञ्चप्रकारा, उपयोगबाहुल्यापेक्षं चैतत्। अपरे च ध्रुवाप्रकाराः सन्ति, अल्पोपयोगित्वात् तु न लक्षिताः। 'कविध्रुवेति' कवेः प्रबन्धकर्तुरियं पञ्चविधा ध्रुवा। अनेन रङ्गमध्यवर्त्तिनीनां ध्रुवाणां रङ्गविघ्नानन्तरं नाद्याचार्यकल्पितानां गानध्रुवाणां च व्युदास इति॥ १५५॥

अथ नाट्यपात्राणां प्रकृतिभेदानाह—

उत्तमा मध्यमा नीचा प्रकृतिर्नृ-स्त्रियोस्त्रिधा।
एकैकापि त्रिधा स्वस्वगुणानां तारतम्यतः॥ १९६॥

उदित्यव्ययमुत्कृष्टेऽर्थे ततः प्रकृष्टार्थे तमप्युत्तमा। प्रकर्षेण क्रियन्ते बाह्या चेष्टा अस्या इति प्रकृतिर्जन्मसहभवं शुभाशुभं शीलम्। त्रिधेति तिस्रोऽपि प्रकृतयः स्वस्थाने उत्तमा-मध्यमा-नीचाश्चेति। गुणाः प्रत्येकं प्रकृतिषु वक्ष्यमाणाः। प्रकृष्टस्य किञ्चिदाधिक्य-बहुत्वभाविनोस्तरप्-तमप्प्रत्यययोरनुकृतिस्तर-तमाविति तयोर्भावस्तारतम्यं सामान्य-किञ्चिदाधिक्य-प्रातिशयाधिक्यलक्षणावस्थात्रययोगित्वमिति॥ १५६॥

अथोत्तमप्रकृतेः पुंसो गुणानाह—

शरण्यो दक्षिणस्त्यागी लोकशास्त्रविचक्षणः।
गाम्भीर्य-धैर्य-शौण्डीर्य-न्यायवानुत्तमः पुमान्॥ १९७॥

शरणमापद्गतत्राणं तत्र साधुः। दक्षिणोऽनुकूलः। लोकच्छन्देनात्र

" [1] एसो सियकरवित्थरपणासियासेसवेरितिमिरोहो ।
नियविह(हि)वरे(से)ण चंदो गयणं गह लंघिउं विसइ ॥ "

इयं स्वापायशङ्किनः कृतकोन्मत्तस्य कुमारचन्द्रगुप्तस्य चन्द्रोदयवर्णनेन प्रवेशप्रतिपादिकेति ।

अङ्कान्तेऽङ्कमध्ये वा सनिमित्तं रङ्गात् पात्रस्य बहिर्निःसरणं निष्क्रमः, तत्प्रयोजना अनुशक्तिकादेराकृतिगणत्वादिकण्युभयपदवृद्धौ नैष्क्रामिकी ।

यथा देवीचन्द्रगुप्ते पञ्चमाङ्कान्ते—

" [2] बहुविहकज्जविसेसं अइगूढं निण्हवेइ मयणादो ।
निक्खलइ खुद्धचित्तउ रत्ताहुत्तं मणो रिउणो ॥ " इति ।

इयं उन्मत्तस्य चन्द्रगुप्तस्य मदनविकारगोपनपरस्य मनाक् शत्रुभीतस्य राजकुलगमनार्थं निष्क्रमसूचिकेति ।

प्रस्तुतरसोल्लङ्घनेन रसान्तरोद्भावनमाक्षेपः, तत्प्रयोजना आक्षेपिकी । यथोदात्तराघवे रामस्य प्रस्तुतशृङ्गारोल्लङ्घनेन—

" अरे रे तापस ! स्थिरीभव, क्वेदानीं गम्यते ?

स्वसुर्मम पराभवप्रसव एकदत्तव्यथः
खरप्रभृतिबान्धवोद्दलनवासनघुक्षितः ।
तवेह विदलीभवत्तनुसमुच्छलच्छोणित-
च्छटाच्छुरितवक्षसः प्रशममेतु कोपानलः ॥ "

इत्यादि नेपथ्यवाक्याकर्णनेन वीररसाक्षेपः ।

प्रस्तुतस्य रसस्य विभावोन्मीलनेन निर्मलीकरणं प्रसादः । प्रविष्टपात्रस्यान्तर्गतचित्तप्रवृत्तेः सामाजिकान् प्रति प्रथनं वा प्रसादः । प्रसादप्रयोजना प्रासादिकी । इयं च प्रावेशिक्याक्षेपिकानन्तरमवश्यं प्रयोज्येति वृद्धसम्प्रदायः ।

---

१ एष सितकरविस्तरप्रणाशिताशेषवैरितिमिरौघ ।
निजविभावरेण ([?] विधिवशेन) चन्द्रो गगनमह लङ्घितु विशति ॥

२ बहुविधकार्यविशेषमतिगूढं निह्नुते मदनात् ।
निष्कल( स्सर )ति क्षुब्धचित्तो रक्ताक्षिप्त मनो रिपो ॥

अन्तरं छिद्रं तत्र भवा आन्तरी अनुकर्तुर्यदा अनाशङ्कित एव धनविघातादिना विघात उद्धतप्रयोगश्रमाद् वा मूर्छा–प्रमादिसम्भावना वस्त्राभरणादेर्वा प्रच्युतिस्तदा तत्संवरणावकाशदित्सयेयं गीयते। अस्यां च प्राक्तनं भावि वा र[स]स्य स्वरूपमनुवर्त्यम्। छिद्राच्छादनमात्रप्रयोजनत्वाचास्या न सार्थकपव(ठ)नासनमुपयोगीति शुष्काक्षराण्येवास्यां निबध्यन्ते।

सङ्गतं प्रवेशाद्यनुरूपार्थम्। चित्रो नानाप्रकारः सरः–काननादिदिवस–रात्रि–सन्ध्याऽऽदिरुत्तम–मध्यमाधमप्रकृतिर्गज–वाजि–सिंहादिर्भावो रत्यादिकश्चार्थो यत्र। अर्थश्च तथा निबन्धनीयो यथोपश्रुतिशकुनन्यायेन प्रत्ययेन प्रस्तुतोपयोगी भवति रूपकं नियतमात्राक्षरं छन्दः। गेयं स्वरतालैर्गानार्हम्। पञ्चधा प्रवेशादिभिः पञ्चप्रकारा, उपयोगबाहुल्यापेक्षं चैतत्। अपरे च ध्रुवाप्रकाराः सन्ति, अल्पोपयोगित्वात् तु न लक्षिताः। 'कविध्रुवेति' कवेः प्रबन्धकर्तुरियं पञ्चविधा ध्रुवा। अनेन रङ्गमध्यवर्तिनीनां ध्रुवाणां रङ्गविघ्नन्तरं नाट्याचार्यकल्पितानां गानध्रुवाणां च व्युदास इति ॥ १५५ ॥

अथ नाट्यपात्राणां प्रकृतिभेदानाह—

उत्तमा मध्यमा नीचा प्रकृतिर्नृ–स्त्रियोस्त्रिधा।
एकैकापि त्रिधा स्वस्वगुणानां तारतम्यतः ॥ १५६ ॥

उदित्यव्ययमुत्कृष्टेऽर्थे ततः प्रकृष्टार्थे तमप्युत्तमा। प्रकर्षेण क्रियन्ते बाह्या चेष्टा अस्या इति प्रकृतिर्जन्मसहभवं शुभाशुभं शीलम्। त्रिधेति तिस्रोऽपि प्रकृतयः स्वस्थाने उत्तमा–मध्यमा–नीचाश्चेति। गुणाः प्रत्येकं प्रकृतिषु वक्ष्यमाणाः। प्रकृष्टस्य किञ्चिदाधिक्य–बहुत्वभाविनोस्तरप्–तमप्प्रत्यययोरनुकृतिस्तर–तमाविति तयोर्भावस्तारतम्यं सामान्य–किञ्चिदाधिक्य–सातिशयाधिक्यलक्षणावस्थाप्रयोगित्वमिति ॥ १५६ ॥

अथोत्तमप्रकृतेः पुंसो गुणानाह—

शरण्यो दक्षिणस्त्यागी लोकशास्त्रविचक्षणः।
गाम्भीर्य–धैर्य–शौण्डीर्य–न्यायवानुत्तमः पुमान् ॥ १५७ ॥

शरणमापद्गतत्राणं तत्र साधुः। दक्षिणोऽनुकूलः। लोकशब्देनात्र

लोकव्यवहार उच्यते, तत्र विचक्षणः । एवमादयोऽन्येऽप्युत्तमपुरुषगुणा द्रष्टव्या इति ॥ १५७ ॥

अथ मध्यमप्रकृतिः—

मध्यो मध्यगुण

मध्या नात्यु(त्यु)त्कृष्टा नाप्यपकृष्टा गुणा लोकव्यवहार-चातुर्य-कला-विचक्षणत्वादयो धर्मा अस्येति ॥

अथ नीचप्रकृतिः—

नीचः पापीयान् पिशुनोऽलसः ।

कृतघ्न कलही क्लीबः स्त्रीलोलो रूक्षवान्(गू) जडः ॥ १९८ ॥

पिशुनः कर्णेजपः । क्लीबो हीनसत्त्व इति ॥ १५८ ॥

अथोत्तमां स्त्रियमाह—

लज्जावती मृदुर्वी(धी)रा गम्भीरा स्मितहासिनी ।
विनीता कुलजा दक्षा वत्सला योषिदुत्तमा ॥ १९९ ॥

वत्सला स्नेहलेति ॥ १५९ ॥

अथ मध्यमा-नीचे—

नरवन्मध्यमा-नीचे

मध्यम-नीचपुरुषवन्मध्यमा-नीचे स्त्रियौ बोद्धव्ये । एषा नृ-स्त्रियोस्त्रिधा प्रकृतिरनुरूपा विरूपा रूपानुरूपिणी चेति पुनस्त्रिप्रकारा । तत्रानुरूपा पुंसः पौंस्नः स्त्रियास्तु स्त्रैणो वयोऽवस्थानुरूपो भावः । विरूपा तु बालोचितभावस्य स्थविरेण स्थविरोचितस्य तु बालेन दर्शनम् । रूपानुरूपिणी पुरुषोऽपि स्त्रीरूपेण भूत्वा स्त्रिया पुंरूपया स्त्री-पुंसभावदर्शनमिति ॥

अथ प्रबन्धेषु नीचप्रकृतिकमपि नायकमाह—

नीचोऽपीशः कथावशात् ।

कथा वृत्तं तस्या वशः सामर्थ्यं हसनीयत्वादि तस्माद् भाण-प्रहसनयोः कस्यांचिद् वीथ्यां च नीचोऽपि नायकः । प्रथमविवेके मध्यमोत्तमयोर्नायकत्वमुक्तम्, तदपवादोऽयमिति ॥

अथ सर्वरूपकेषु मुख्यनायकं लक्षयति—

प्रधानफलसम्पन्नोऽव्यसनी मुख्यनायकः ॥ १६० ॥

व्यसनं स्याद्यासक्तिर्विपद् वा ॥ १६० ॥

अथास्य गुणानुद्दिशति—

तेजो विलासो माधुर्यं शोभा स्थैर्यं गभीरता ।
औदार्यं ललितं चाष्टौ गुणा नेतरि सत्त्वजाः ॥ १६१ ॥

अष्टावित्युक्तपरिगणनम्, न तु सङ्ख्यानियमोऽन्येषामपि सम्भवात् । सत्त्वं विपुलाशयत्वम् ॥ १६१ ॥

अथैषां प्रत्येकशो लक्षणम्—

क्षेपादेरसहिष्णुत्वं तेजः प्राणात्ययेऽपि च ।

क्षेपस्तिरस्कारः । आदिशब्दाद् दैन्यावज्ञादिग्रहः । प्राणात्ययेऽपि चेति प्राणात्ययमप्युपगम्येत्यर्थः । तेनासहिष्णुत्वमक्षमा, न तु देशकालावस्थाद्यपेक्षया नीत्या(ता)वसहनपूर्वकं निर्यातनमिति ॥

अथ विलासः—

विलासो वृषवद् यानं धीरा दृक् सस्मितं वचः ॥ १६२ ॥

वृषो महोक्षः । धीरत्वमुदात्तत्वमिति ॥ १६२ ॥

अथ माधुर्यम्—

माधुर्यं विकृतिः सु(स्तु)त्या क्षोभहेतौ महत्यपि ।

प्रस्तुताद् रूपाद् रूपान्तरं विकृतिः । सु(स्तु)त्या रोमाञ्च-परिकर-बन्धश्मश्रुकेशसमारचन-शस्त्रावलोकनादिकात् । क्षोभः सत्त्वचलनमिति ॥

अथ शोभा—

शोभा चिह्नं घृणा-स्पर्द्धा-दाक्ष्य-शौर्योद्यमोन्नये ॥ १६३ ॥

चिह्नं घृणादेः सचानिश्चयहेतु शरीरविकारः । घृणा नीचार्थजुगुप्सनम् । स्पर्द्धाऽधिकेन सह साम्याधिक्याभिलाषः । उद्यम उत्साहः । एषामुन्नयः सचानिश्चय इति ॥ १६३ ॥

अथ स्थैर्यम्—

विघ्नेऽप्यचलनं स्थैर्यं प्रारब्धादशुभादपि ।

विघ्नः प्रत्यूहः। अचलनं दार्ढ्यम्। अशुभमिह-परलोकानुचितमिति ॥

अथ गाम्भीर्यम्—

गाम्भीर्यं सहजा मूर्तिः कोप-हर्षादिगोपनी ॥ १६४ ॥

सहजा मुखराग-दृष्टिविकारादिरहिता। मूर्तिर्देहस्वभावः। आदिशब्दाद् भयशोकादिग्रहः। गोपनी प्रच्छादिकेति ॥ १६४ ॥

अथौदार्यम्—

औदार्यं शत्रु-मित्राणां प्राणितेनाप्युपग्रहः ।

बहुवचनान्मध्यस्थानां ग्रहः। प्राणितशब्देन स्वजीवितव्यस्य दानमुच्यते। अपिशब्देन दान-प्रियभाषणादिग्रहः। उपग्रह उपकार इति ॥

अथ ललितम्—

शृङ्गारिचेष्टा ललितं निर्विकाराः स्वभावजाः ॥ १६५ ॥

शृङ्गारिण्यः शृङ्गाररसजनिताश्चेष्टास्तिर्यग्विलोकन-वक्रोक्तिभाषण-शरीरसंस्कारादिकाः। निर्विकारा गर्हारहिताः। स्वभावजा अबुद्धिपूर्विका इति ॥ १६५ ॥

अथ मुख्यनेतारमुक्त्वा गौणमाह—

अमुख्यो नायकः किञ्चिदूनवृत्तोऽन्यनायकात् ।

अमुख्यत्वं प्रधानफलापेक्षयाऽवान्तरफलभाजनत्वात्। नायकत्वं बहुतरवृत्तव्यापकत्वान्मुख्यनेतृसहायभूतत्वाच्च। किञ्चिदूनं स्वल्पन्यूनं वृत्तं शौर्य-त्याग-बुद्ध्यादिकं यस्य। अयं च पताका-प्रकरीरूपो नायको द्रष्टव्य इति ॥

अथ प्रतिनायकमाह—

लोभी धीरोद्धतः पापी व्यसनी प्रतिनायकः ॥ १६६ ॥

मुख्यनायकस्य प्रतिपन्थी नायकः प्रतिनायकः । यथा राम-युधिष्ठिरयो रावण-दुर्योधनवदिति ॥ १६६ ॥

अथ विदूषकादीनां प्रकृतिं केषांचिल्लक्षणं चाह—

नीचा विदूषक-क्लीब-शकार-विट-किङ्कराः ।
हास्यायाद्यो नृपे श्यालः शकारस्त्वेकविद् विटः ॥ १६७ ॥

क्लीबो नपुंसकः । एषां च नीचत्वं नैसर्गिकम् । स्वामिचित्तानुरोधादौपाधिकं शु (तु) मध्यमत्वमपि । तत्राद्यो विदूषको हास्यनिमित्तं भवति । हास्यं चास्याङ्ग-नेपथ्य-वचोविकारात् त्रेधा । तत्राङ्गहास्यं खलति-खञ्ज-दन्तुर-विकृताननत्वादिना । नेपथ्यहास्यमत्यायताम्बरत्वोल्लोकित-विलोकितगमनादिना । वचोहास्यमसम्बद्धानर्थकाश्लीलभाषणादिना भवति । नृपे नृपस्य सम्बन्धी श्यालः पत्नीभ्राता । नीचत्वादेव चायं हीनजातिः।हास्यायेत्यत्रापि सम्बन्धान्न सर्वो राजपुत्रादिर्नृपश्यालः शकारः, किं तर्हि विकृतहास्यहेतुः परिचारक एव । एकं राजोपयोगि किंचिद् गीतादिषु मध्ये वेत्तीत्येकविद् विटो ज्ञेय इति ॥ १६७ ॥

अथ धीरोद्धतादीनां नेतॄणां प्रत्येकं विभिन्नान् विदूषकानाह—

स्निग्धा धीरोद्धतादीना यथौचित्यं वियोगिनाम् ।
लिङ्गी द्विजो राजजीवी शिष्याश्चैते विदूषकाः ॥ १६८ ॥

स्निग्धाः सुहृदः । आदिशब्दाद् धीरो[दा]त्त-धीरललित-धीरशान्ता गृह्यन्ते । एषां वियोगिनां विप्रलम्भशृङ्गारवतामौचित्यानतिक्रमेण लिङ्ग्यादयो यथासम्भवं सन्धिं विग्रहेण विग्रहं सन्धिना च विशेषेण दूषयन्ति विनाशयन्ति, विप्रलम्भं तु विनोददानेन विस्मारयन्तीति विदूषकाः । उचितश्च लिङ्गी देवतानाम्, ब्राह्मणस्य शिष्यः, राज्ञां तु शिष्यवर्जास्त्रयः, एवं वणिगादेरपीति ॥ १६८ ॥

अथैषामेव धीरोद्धतादीनां सहायानाह—

युवराज-चमूनाथ-पुरोधः-सचिवादयः ।
सहाया एतदायत्तकर्मैव कलितः पुनः ॥ १६९ ॥

